# यजुर्वेदिनां संध्या पद्धतिः

पण्डिताग्रगण्य

श्रीशरीरानन्द वेदरत्नेन

सङ्कलिता ।

दरभंगा निवासी

केजड़ीवालोपाधी जुहारमल गुप्तार्थ व्ययेन चांकिता ।



कलकत्ता

बड़ा बाजार सूतापट्टी नं० ६१

'उचितवक्ता' यंत्रमें डी.पी. मिश्रने छापकर प्रकाश किया।

संवत् १६४६।

# यजुर्वेदिनां संध्यापद्धतिः ।

श्रीगणेशाय नमः ।

श्रीशम्भोस्तनयं नत्वा पितरावभिवाद्य च ।
शरीरानन्दशर्माहं कुर्वे सन्ध्यार्थ दीपिकाम् ॥ १ ॥
यद्यप्यकार्षुरुरवो व्याख्यां सन्ध्यार्थकाशिकाम् ।
वाङ्मनः काय संशुद्ध्यै पुनः कुर्वे तथाप्यहम् ॥ २ ॥
मेरौ च परमाणौ च पदार्थत्वं यथासमम् ।
व्याख्यातृत्वं तथा श्रीमदाचार्य्येषु च मय्यपि ॥ ३ ॥
मन्त्रार्थबोधा शक्तानां जनानां हितकार्य्ययम् ।
नोपेच्यः किन्तु सत्कार्य्यो ग्रन्थोऽयं लघुना कृतः ॥ ४ ॥
खलैस्तु खलता कार्या न हानि स्तावतास्ति मे ।
कस्तूरी पामरैस्त्यक्ता स्वं महत्वं किमुज्झति ॥ ५ ॥
प्रेम्णा सद्भिर्ग्रन्थः सेव्यः शब्दार्थतः सदोषोऽपि ।
संशोध्यो वापि हरिणा सुदामसुनि सतुषपृथुकमुष्टिरिव॥६॥

* मू॰ स्नात्वोत्तरीयं परिधायाचम्य हस्तौ पादौ प्रक्षाल्यासनोपवेशन पूर्वकमाचमनं कृत्वा तिलकं सङ्कल्पञ्च कुर्यात् मू॰ *

अथ सन्ध्याप्रयोगव्याख्या

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि ।
पवित्राणां तथा दाने जप्ये च विधिदर्शिते ॥

इति स्मृतेः

स्नातः पुमान् अधिकारी न अस्नातस्तेन स्नात्वेति स्नाने फलमप्याह याज्ञवल्क्यः।

अगम्यागमनात् स्तेयात् पापेभ्यश्च प्रतिग्रहात्।

रहस्याचरितात्पापान्मुच्यते स्नानमाचरन्। इति

क्त्वा प्रत्ययेनानन्तर्य्यार्थो लभ्यते तदाह तदनन्तरमिति तदनन्तरम् उत्तरीयं धौतं वस्त्रं परिधाय कृत्वा धौतवस्त्र-परिधानमन्तरा कृतस्य कर्मणो राक्षसत्वापत्तेः तथाच वशिष्टः। आर्द्रवासाश्च यः कुर्यात् जपहोमादिका क्रियाः।

तत्सर्वं राक्षसं विद्धि बहिर्जानुकृतं च यत्।

अतोऽवश्यं वस्त्रं पीताम्बरादि धार्य्यं तत आचम्य तत्र मानं बौधायनः। नीवीं विस्रस्य परिधायोपस्पृशेदिति अथ प्रसङ्गादाचमनप्रकारमाह।

दक्षिणेनोदकं पीत्वा वामेन संस्पृशेद्बुधः।

तावन्न शुद्ध्यते तोयं यावद्वामेन न स्पृशेत्॥

इति वचनात् आचमनसमये वामहस्तेन दक्षिणहस्तं स्पृशेत् इति भावः।

ततो वस्ति स्थानावतरितजलनिष्ठाशौच परिहाराय हस्तौ पादौ प्रक्षाल्येत्युक्तं तत्र मानं पराशरः।

स्नात्वा निवस्य वासोऽन्यज्जङ्घे प्रक्षालयेन् मृदा।

इति जङ्घे इति हस्तयोरप्युपलक्षणम्।

याज्ञवल्क्योऽप्याह

स्नात्वैवं वाससी धौते अक्लिष्टे परिधाय च।

प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तथेति॥

आसने चोपविश्य

आसनोपवेशने प्रमाणं छन्दोग परिशिष्टे।

आसीन ऊर्द्ध्वं प्रह्वोवा नियमो यत्र नेष्टशः।

तदासीनेन कर्त्तव्यं न प्राह्णेन न तिष्ठता इति।

इत्यनेन सन्ध्याया जले पर्य्युदासः तथा हि कात्यायनः

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः।

अत्र दर्भेषु इति श्रवणात् स्थले एव सन्ध्याकरणम् न तु जले यत्रोपस्थान पर्य्यन्ता जले सन्ध्या सातु शुद्धस्थलालाभे साङ्केतिकी न प्रमाणं तत आचमनमिति कर्मणोऽङ्गं तन्मान-माह वायुपुराणे।

क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः।

भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः॥

नच निवसनोत्तरमाचमने विधाने पुनराचमन विधानं पुनरावृत्ति दोष इति वाच्यम्। वस्त्रपरिधानानन्तरमाच-मन विधानात् इदन्तु कर्मणोऽङ्गम् अनाचमन पूर्वक क्रिया-करणस्य निष्फलत्वोक्तेः ततस्तिलकं तत्रप्रमाणं हेमाद्रिः।

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि।

तत्सर्वं नश्यति क्षिप्रमूर्द्ध्वपुण्ड्रं विनाकृतम्॥

अन्यच्च वृहन्नारदीये

यज्ञोदानं जपो होमः स्वाध्यायः पितृकर्म च।

वृथा भवति विप्रेन्द्राः ऊर्द्ध्वपुण्ड्रं विनाकृतम्॥ इति

ऊर्द्ध्वपुण्ड्रमिति त्रिपुण्ड्रादीनामुपलक्षणम् तेन स्वकुला-चारात् पुण्ड्रादिविधानं कर्त्तव्यं कुलाचारे प्रमाणं मन्त्रवर्णः मानः पथः पित्र्यान्मानवा दधिदूरं नैष्ट परावत इति।

च पुनः सङ्कल्पं कुर्य्यात्। स चेत्थं अद्यदिने ममोपात्त-दुरितक्षय द्वारा श्रीपरमेश्वर प्रीत्यर्थं प्रातः सन्ध्यामुपासिष्य इति सङ्कल्पः।

* (१) मू॰ अथ सन्ध्योपासनं विधीयते अपवित्रः पवित्रो

वा सर्वावस्थां गतोऽपि वा यः स्मरेत् पुण्डरीकाक्षं स वाह्या-भ्यन्तरे शुचिरित्यात्मानं प्रोक्षयेत् । सू० (१) *

टीका । तत्रादौ ग्रन्थारम्भे तत्समाप्तिकारणविघ्नविनाशनं परमाप्ताचारपरम्परा प्राप्तमङ्गलाचरणमुचितमिति हेतोः तदाचरणीयत्वे प्रचुरतरविघ्नशङ्काशङ्कित चेतसां प्रचुरतर-विघ्नभग्नाय प्रचुरतरमङ्गलमेव शिष्यशिक्षायै निबध्नन् अथ शब्दोपादानेनाचचार ।

अथेत्यव्ययं मङ्गलार्थे तथाच माधवः ।
प्रशब्दश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥
कण्ठम्भित्वा विनिर्यातौ तस्मान्माङ्गलिका वुभौ ॥

इति सन्ध्यायाः सन्ध्याकालाधिष्ठात्री गायत्री देव्या उपा-सनं इष्टाधिगम हेतु मानसप्रत्यय प्रवाह उपासना सा विद्यते यस्मिन् कर्मणि तदुपासनं कर्म विधीयते क्रियते इत्यर्थः । तत्र सन्ध्या का इत्याकाङ्क्षायामाह ।

ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च ।
कस्तां नोपासयेद्देवीं सिद्धिकामो द्विजोत्तमः ।

इति योगी याज्ञवल्क्येन देवीत्वेन कीर्त्तिता तेन सन्ध्या-रूपा या देवता तस्याः वक्ष्यमाण प्राणायामादिना उपासनं सन्ध्योपासनम् इति । यद्वा सम्पूर्णादित्यमण्डलदर्शनयोग्यः कालोऽहः तद्विपरीता रात्रिः यस्मिन् काले खण्डमण्डलस्यो-पलब्धिः स सन्धिः तत्र विधीयमाना क्रिया सन्ध्या । यद्वा यावद्होरात्रयोः सन्धौ यश्च मध्याह्नापराह्णयोः सन्धिः तेषु विधीयमाना क्रिया सन्ध्या तस्या उपासनं सेवनमित्यर्थः तत्र सन्ध्या इति कर्मणो नाम तच्च प्रमाणं छन्दोगपरिशिष्टे ।

अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनकं विधिम् ।
अनर्हः कर्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥

इति वचनात् सन्ध्या इति वक्ष्यमाण प्राणायामादि कर्मणो नाम तस्या उपासनं सेवनम् अनुष्ठानमिति। उपासन शब्दस्यार्थेऽनुष्ठाने प्रमाणम् आचारः सेवतीत्यादि। अतएव सन्ध्या कृता सन्ध्योपासितेति तुल्यवत् प्रयोगः सा सन्ध्या त्रिविधा प्रातर्मध्याह्नसायं भेदात्।

तथाच

प्रातः सन्ध्यां सनक्षत्रां मध्याह्ने मध्यभास्करा।
ससूर्यां पश्चिमां तिस्रः सन्ध्या उपासत॥ इति
पुनः प्रतिकालं त्रिधा उत्तममध्यमाऽधम भेदात्।

तथाच

उत्तमा तारकोपेता मध्यमा लुप्ततारका।
अधमा सूर्यसहिता प्रातः सन्ध्या त्रिधा मता॥

इति पुनः

उत्तमा सूर्यसहिता मध्यमास्तमिते रवौ।
अधमातारकोपेता सायं सन्ध्या त्रिधा मता॥ इति

अथ विप्राणां विप्रत्वे कारणं सन्ध्यैव वेत्याह।

विप्रो वृक्षो मूलकान्यत्र सन्ध्या
वेदः शाखा कर्म धर्माणि पत्रम्।
तस्मान्मूलं यत्नतोरक्षणीयं
छिन्ने मूले नैव वृक्षो न शाखाः॥

इति अन्यच्च

अनर्हः कर्मणां विप्रः सन्ध्याहीन इत्यादिना सन्ध्योत्तर कर्मणि कृतसन्ध्यस्यैवाधिकार इत्युक्तं तथाच व्यासः।

सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता।
जीवमानो भवेच्छूद्रो मृतः श्वा चैव जायते॥
तस्मान्नित्यं प्रकर्त्तव्यं सन्ध्योपासन मुत्तमम्।

तदभावेऽन्य कर्मादावधिकारी भवेन्नहि ॥

इति अथवा चिरन्तन सन्ध्यात्यागिनः पतितस्येव द्विजाति-कर्मानधिकारः तथाच मनुः ।

नानुतिष्ठति यः सन्ध्यां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद्बहिः कार्य्यः सर्वस्माद्विजकर्मणः ॥

इति मनु दर्शनात् सन्ध्याद्वयमवश्य मेवानुष्ठेयम् । तदननुष्ठाने द्विजत्वहानेः यद्यपत्र मनु वाक्ये सन्ध्यात्रयं नोक्तं तथापि ऋष्यन्तरोक्तवचन प्रामाण्यात् सन्ध्यात्रयमेवेति वचनान्यग्रे मध्याह्न सन्ध्यानिर्णये स्पष्टं करिष्ये ।

अथ प्रसङ्गाद्देशमाह । व्यासः

वहिः सन्ध्या दशगुणा गोष्ठ प्रस्रवणादिषु ।
खाततीर्थे शतगुणा साहस्री जाह्नवी जले ॥

जले इति सामीप्यार्थे सप्तमी तेन जाह्नवीजल समीपे सहस्रगुणा इत्यर्थः । जले सन्ध्या निषेधात् ब्रह्मचारिस्तु ग्रामाद्बहिरेव सन्ध्याभिधानम् । तथाच मनुः
नैनं ग्रामेऽभिनिम्लोचेत सूर्य्यो नाभ्युदियादिति ।

अथ सन्ध्याकालमप्यमाह । याज्ञवल्क्यः

ह्रासोवृद्धिश्च सततं दिवसानां यथाक्रमात् ।
सन्ध्या मुहूर्त्तमात्रन्तु ह्रासे वृद्धौ च सा समा ॥

इति सर्वर्त्तुषु प्रातः सायंसन्ध्या दण्डद्वयमेव भवति ।

अन्यच्च

उदयास्तमया दूर्द्धं यावत्स्यात् घटिकात्रयम् ।
तावत् सन्ध्यामुपासीत प्रायश्चित्तमतः परम् ॥

प्रायश्चित्तमाह ।

कालातिक्रमणे जाते चतुर्थार्घं प्रदापयेत् ।
अथवाष्ट शतं देवीं जप्त्वादौ तां समाचरेत् ॥

अल्पकालातिक्रमे चतुर्थार्घो देयः बहुकालातिक्रमेऽष्ट-शतं जप इति रहस्यम्। किञ्च।

सन्ध्या सायन्त्रिघटिका अस्तादुपरिभास्वतः।

इति स्कान्दात् दण्डत्रयस्य सन्ध्यात्वं दिनरात्र्योः सन्धौमुहूर्त्तः सन्ध्या प्रदोषश्चेत्यलम्। यथा सन्धौ सन्ध्या-मुपासीत नास्तगे नोद्गते रवौ सन्धाविति पूर्वविधानात् नास्तगे सन्धिरूपमुहूर्त्तादूर्द्ध्वं निषेधानुवादकं सति सम्भवे सादित्यामारभेदित्यपरं वा उपक्रमकालमाह संवर्त्तः।

प्रातः सन्ध्यां सनक्षत्रामुपासीत यथाविधि।

सादित्यां पश्चिमां सन्ध्यां अर्द्धास्तमित भास्करामिति।

समाप्तिकालमप्याह।

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्।

इति सूर्य्यनक्षत्रयोर्दर्शनावधित्वेन दीर्घं सन्ध्यात्वं सूच्यते। मनुः।

ऋषयो दीर्घं सन्ध्यात्वात् दीर्घमायुरवाप्नुयुः।

प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्चसमेव च।

दीर्घसन्ध्यात्वं प्रातरुदयावधि सायञ्च नक्षत्रावधि जपेन येन सूर्य्यनक्षत्रयोः प्राक्कालोऽपि नित्यजपाङ्गतया बोध्यते न तु तत्कालस्य सावित्री जपेनाभिव्याप्तिरित्यत्रापि उभय-पक्षेऽपि कामनाविरहे विहितदशादिसंख्यादरः कामिनस्तु दीर्घसन्ध्यात्व एव श्रवणात् जपेन कालव्याप्तावेव तात्पर्य्यम्।

अत्र च जप दीर्घत्वेन दीर्घसन्ध्याभिधानात्।

जपेन सन्ध्याकर्मसमाप्तिरिति मन्तव्यमिति॥

तत्र नाप्रोक्षितं स्पृशेत् किञ्चित् दैवे पित्र्ये च कर्मणि इति वचनात् प्रोक्षणप्राप्तौ पुण्डरीकाक्षोच्चारणेनेति क्वचि-न्निबन्धे लिखितं पुण्डरीकाक्षस्मरणेनेति क्वचित्।

तत्र शङ्खचक्रधरं विष्णुं द्विभुजं पीतवाससम्।
प्रारम्भे कर्मणां विप्र! पुण्डरीकं स्मरेद्धरिम्॥

इति मूलवाक्यं तत्र स्मरणमेव विहितं तथापि उच्चारणस्य स्मरणपूर्वकतयोच्चारणे स्मरणमायात्येवेत्यविरोध इत्याचारानुगृहीतमुच्चारणं क्रियते। तत्राविरुद्धं फलकीर्त्तनमपि क्रियतेऽस्मत्सम्प्रदाये तेनापवित्र इति आत्मानं प्रोक्षेत। तदग्रिमकर्मोपयुक्तपुष्पादींश्च तस्यायमर्थः यः पुण्डरीकाक्षं स्मरेत् स्मृ आध्याने इत्यस्य लिङि सम्भावनार्थक प्रथमपुरुषस्यैकवचनं तेन पुण्डरीकाक्षोच्चारणेन वाह्याभ्यन्तरे शुचिः स्यामिति सम्भावयेत् सवाह्याभ्यन्तरे वाह्यञ्च आभ्यन्तरञ्च वाह्याभ्यन्तरं तस्मिन् वाह्याभ्यन्तरे शुचिः स्यादित्यर्थः किम्भूतो यः न पवित्रः अपवित्रः अकृतस्नान इत्यर्थः पवित्रता केन भवति स्नानादिकर्मणा सा न विद्यते यस्य सः अपवित्र इति वा पवित्रः कृतस्नानः इत्यर्थः वा पुनः किम्भूतः सर्वावस्थां गतः सर्वा चासाववस्था च सर्वावस्था तां गतः प्राप्तः स्पृश्यास्पृश्य दशां गतः इत्यर्थः एतादृशः को भवति यो हि चिरन्तनसन्ध्यात्यागी चिरन्तनसन्ध्यात्यागिनः पतितस्येव द्विजाति कर्मानधिकारः। तस्य च शूद्रवद्वहिः कार्य्य इत्यादि स्मृति वाक्यात् सर्वधर्मे चानधिकारता विधानात्।

इत्यनेन कर्माधिकार प्राप्त्यर्थं शुचित्वादि विशेषणवतैव भवितव्यमित्यभिप्रायः किञ्च सर्वधर्मेष्वाचारवत एवाधिकार इति बोध्यते। तच्चोक्तम्।

सर्वागमानामाचारः प्रथमं परिकल्प्यते।
आचार प्रभवो धर्मो धर्मस्य प्रभुरच्युतः॥

इति वचनात्। सर्वागमानां तत प्रमीतानां धर्माणा-

माचारः शौचस्नान सन्ध्यावन्दनादिरूपः प्रथममधिकारि विशेषण त्वेन पूर्वमेव विद्यमानः सन् परिकल्प्यते तेषां कृत्यता सम्पादन समर्थो भवति इत्यर्थः अनधिकारिणा कृतमकृतमिति न्यायात् अवश्य मेव शुचित्वादि विशेषणवता भवितव्य मित्यभिप्राय; अन्यच्चविस्तर भयान्न लिख्यते।

* (१) सू० वामे बहून् कुशान् दक्षिणे पाणौ पवित्रं कुशत्रयञ्च धृत्वा। स प्रणव गायत्र्या शिखां बध्वा ऐशान्याभिमुखं आचम्य। * (१) सू०

तत्रादौ कुशोपग्रहः कर्त्तव्यः तदुपग्रह मन्तरा कृतापि सन्ध्या अकृता भवति निष्फलत्वात् तच्चोक्तं लघुहारीतेन।

दर्भहीना तु या सन्ध्या यच्च दानं विनोदकम्।
असंख्यातञ्च यज्जप्यं तत्सर्वं निष्फलं भवेत्॥

इति बचनात् वामे बहूनिति।

तत्र प्रमाणमाह।

छन्दोग परिशिष्टे।

सव्यः सोपग्रहः कार्य्यः दक्षिणः सपवित्रकः।

दक्षिणः सपवित्रकः इत्यनेन वामे पवित्रधारण निवृत्तिरुक्ता दधिकौडिन्य न्यायेन सव्ये पाणौ कुशान् कृत्वेति सव्यः सोपग्रह इति पूर्वोक्त कुशत्रय समीपे अग्रिम कर्मोपयुक्ताः कुशा धर्त्तव्या इत्युक्तं तत्र कुशस्थकाङ्क्षितत्वात्। तेन वामे बहून् त्रिभ्योऽधिकानित्यर्थः दक्षिणे पवित्रं सुवर्णादिनिर्मितं सुवर्णादिनिर्मिते मानमाह।

अन्यानि च पवित्राणि कुशदूर्वात्मकानि च।
सुवर्णात्मक पवित्रस्य त्वेकां नार्हन्ति वै कलाम्॥

इति अन्यच्च पञ्चगुञ्जमाषमानेन षोड़शमाषमानं हेममयं पवित्रकमिति।

कुशत्रयञ्च कृत्वा शिखां दध्नीयात् कुत्रचित्सपवित्रमिति पाठः तदशुद्धं गौरवात् किञ्च पवित्रं एकस्मिन्नेव हस्ते धार्य्यम्।

तत्रमानमाह। लघुहारीतः।

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे।
अशून्यन्तु करं कुर्य्यात् सुवर्णरजतैः कुशैः॥

इत्यत्र करमित्येक वचनेन एकस्मिन्नेव हस्ते पवित्रं धार्य्यम्।

अन्यच्च

आचम्य प्रयतो नित्यं पवित्रेण द्विजोत्तम इत्यत्रापि पवित्रेणेत्येक वचनमेव. तेन एकस्मिन्नेव हस्ते एकं पवित्रं धार्य्यमिति दिक्।

परञ्च वामहस्तस्थिते दर्भे दक्षिणेन न चाचमेत्।
करद्वय स्थिते दर्भे आचामेत्सोमपो भवेत्॥
न चोच्छिष्टं पवित्रं तद्भुक्ते पित्रेत्र च तत्त्यजेत्॥

इति वचनात् करद्वयपवित्रधारणेऽपि महत् लाभः तेन यथारुचि पवित्र धारणं कर्त्तव्यमिति।

अन्यच्च स्मृतौ

दर्भाभावेतुकाशाः स्युः काशाः कुश समाः स्मृताः।
काशाभावे गृहीतव्याः अन्येदर्भा यथोचिताः॥
दर्भाभावे स्वर्णरूप्यताम्रैः कर्मक्रियाः सदा।
कुशकाशशरा दूर्वा यवगोधूमवाल्वजाः॥
सुवर्णं राजतं ताम्र दशदर्भाः प्रकीर्त्तिताः।
स्नाने होमे तथा दाने स्वाध्याये पितृतर्पणे॥

सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा ।
सर्वेषां वा भवेत् द्वाभ्यां पवित्रं ग्रथितं न वा ॥
स पवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ।
नोच्छिष्टं तत् सदर्भञ्च दर्भोच्छिष्टं च वर्जयेत् ॥ इति ।

अथ प्रकृतमनुसराम शिखां बध्नीयात् । सदा बद्ध-शिखेनत्विति वचनात् तदभावे दोषः ।

विशिखो व्युपवीतश्च यत् करोति न तत्कृतमिति ।

स प्रणवगायत्र्या । प्रणवेन सह या सप्रणवा सप्रणवा चासौ गायत्री च सप्रणवगायत्री तया अत्र सह शब्दस्य स इत्यादेशः ।

स० * ऋतमित्यभिमन्त्र्य पुनराचामेत् ततो वारिणात्मानं वेष्टयित्वा सप्रणव गायत्र्या रक्षां कुर्य्यात् । * सू०

शिखाबन्धने प्रमाणमाह व्यासः ।
स्मृत्वोङ्कारञ्च गायत्रीं निबध्नीयाच्छिखान्ततः ।
पुनराचम्य हृदयं नाभिं स्कन्धौ च संस्पृशेत् इति ॥
अन्यच्च वायुपुराणे
ओङ्कार युक्त गायत्रीं समुच्चार्य्य ततोद्विजः ।
शिखाबन्धं प्रकुर्वीत येन स्याद्विघ्नबन्धनं इति ॥

यदि तस्मिन् काले मुक्तशिखः स्यात्तदाऽनेन मन्त्रेण शिखां बध्वा आचम्येत्यर्थः ननु समन्त्रकत्वार्थं पूर्वं बद्धापि शिखा मोचनीयेति भ्रमः कार्य्यः । न च स्नानविधौ बद्ध-शिखीत्यादि विधानात् स्नानात् प्रागेव शिखाबन्धन विधानं तदन्तरा कृतस्या कृतविधानात् तेन स्नानादौ शिखाबन्धनं विहितं तदुत्तर काल एव सन्ध्या तदा शिखा बद्धैव तेन सन्ध्यादौ शिखाबन्धन मनुपपन्नं मध्येमोचन विधानाभावादिति वाच्यं तल्लाभे तद्वाक्योच्चारणं कृत्वङ्गता लाभार्थमिति ।

ततः शिखाबन्धनानन्तरं ऐशान्याभिमुखः ईशानस्येयमैशानी अर्थात् ईशानाधिष्ठातृका दिगित्यर्थः तस्या अभिमुखः सम्मुखः ऐशान्याभिमुखः पुमान् आचम्य पुनराचामेत्।

तत्र प्रमाणम्। याज्ञवल्क्यः।

ऐशान्याभिमुखो भूत्वा शुचिः प्रयतमानसः।
आचान्तः पुनराचामेदृतमित्यभिमन्त्र्य च॥ इति।

ऋतमित्यृचो व्याख्यानं त्वग्रेऽघमर्षणप्रक्रमणे करिष्यामः।

पुनराचमने फलमाह।

सैव आन्तरं शुद्ध्यति ह्येवमन्नपानमलौ कृतमिति वचनात्।

अन्नपानादिनिष्ठदोषनिराकरणार्थमिदं पुनराचमनम्।

अथ प्राणायामं विधित्सुस्तदङ्गीभूतां रक्षामाह।

ततो वारिणेति।

ततो वारिणा जलेन आत्मानं शरीरं वेष्टयित्वा प्रणवपूर्वकगायत्र्या रक्षां कुर्य्यात्।

तद्यथा—

छन्दोगपरिशिष्टे रक्षान्ते वारिणात्मानं परिक्षिप्य समन्ततः रक्षाकार्य्येति शेषः अन्तशब्दस्यादावपि शक्तत्वात् शिष्टानुरोधात् प्राणायामादावियं रक्षाकार्य्येत्यर्थः।

अथाङ्गमुक्त्वाङ्गिनमाह।

अङ्गीप्राणायामः लक्षणं तस्य याज्ञवल्क्येनोक्तं।
गायत्रीं शिरसा सार्द्धं जपेत् व्याहृतिपूर्व्विकां॥
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः इति।

गायत्री तु प्रसिद्धा आपोज्योतिरित्यादिशिरः व्याहृतयः छन्दोगपरिशिष्टे। भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः महर्जनस्तपः सत्यं इति प्रतिप्रणवः प्रत्येकमोङ्कारपूर्वं एवत्सर्वं यथाविधि। त्रीन् वारान् मुखनासिकासञ्चारि-

वायुं निरुन्धन् मनसा जपेत्। इत्ययं सर्वत्र प्राणायामः स च प्राणसंयमः त्रिभिः पूरककुम्भकरेचकैर्भवति। एतच्च योगियाज्ञवल्क्येनैव पौर्वापर्य्यपरामर्शात् व्यक्तीकृतम्। एवञ्च प्रत्येकमेव प्राणायामत्वात् प्रत्येकमेव त्रिरावृत्तौ मन्त्रपाठः एतावतैव प्राणायामत्रय सिद्धिरिति अतएव ततोऽन्तः शुध्यति त्रिभिरित्युपसंहारः।

आदानं रोधमुत्सर्गं वायो स्त्रि स्त्रिः समभ्यसेत्।

इति व्यासोक्तो नवधाभ्यासः पक्षान्तरं त्रिविधं केचिदिच्छन्ति तथैव नवधापरे इत्यनेनाप्यभिधानात्।

इति संक्षेपः। किञ्च जपादिकाले च तत्तन्मन्त्राणाम् ऋषिप्रभृतीनां स्मरणमवश्यं कर्त्तव्यं तदस्मरणे सम्पूर्णफलाप्राप्तिः अनिष्टप्राप्तिश्च तदपि ब्राह्मण सर्वस्वग्रन्थधृतेन कात्यायनवचनेनोक्तं यथा यो वा अविदितार्षेयच्छन्दो दैवत विनियोगेन ब्राह्मणेन मन्त्रेण वा यजते याजयति अध्यापयति वा स्थाणुं गच्छति श्वभ्रं वार्च्छेत् प्रमीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति अथ मन्त्रे मन्त्रे वेदसर्वमायुरेति अयातयामान्यस्य छन्दांसि भवन्ति तस्मान्मन्त्रे मन्त्रे विद्यादिति।

अन्यच्च

यजुर्वेदधृत कात्यायनवाक्यं द्रष्टारः ऋषयः स्मर्त्तारः परमेष्ठ्यादयः देवता मन्त्रान्तर्भूताः अग्न्यादिका हविर्भाजः स्तुतिभाजो वा छन्दांसि गायत्र्यादीनि एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयति वा तस्य ब्रह्मनिर्वीर्य्यं यातयामं भवति अन्तराश्च गर्त्तं वापद्यते स्थाणुं वर्च्छेति प्रमीयते पापीयान् भवति।

अन्यच्च। याज्ञवल्क्यः।

यस्तु जानाति तत्त्वेन आर्षं१ छन्दश्२च दैवतं३ ।
विनियोगं४ ब्राह्मणञ्च५ मन्त्रार्थज्ञानकर्म च ॥
एकैकस्या ऋचः सोऽभिवन्द्यो ह्यतिथिवद्भवेत् ।
देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः ।
पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः ॥
अधिकारी भवेत्तस्य रहस्यादिषु कर्मसु ।
आर्षं१ छन्दश्२च दैवत्यं३ विनियोगः४ स्तथैव च ॥
वेदितव्यं प्रयत्नेन ब्राह्मणेन५ (क) विशेषतः ।
अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम् ॥
होममन्तर्जलादीनि तेभ्योऽल्पाल्पफलं लभेत् ।
अन्तर्जलादिके जप्ये इतरेषामजानताम् ॥
नाधिकारोऽस्ति मन्त्राणां एवं श्रुतिनिदर्शनम् ।

एवमार्षादिज्ञानस्याप्यावश्यकमुक्त्वार्षादि स्वरूपमप्याह ।

येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन च ।
मन्त्रेण तस्य तत्प्रोक्तं ऋषि भावस्तदात्मकः ॥
छादनाच्छन्द इत्युक्तं वाससो वाथवा कृते ।
आत्मा तु छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ।
आदित्यैर्वसुभीरुद्रैस्तेन छन्द इतीरितम् ।
यस्य यस्य च मन्त्रस्य उद्दिष्टाया च देवता ॥
तदाधारं भवेत्तस्य दैवतं३ देवतोच्यते ।
पुराकल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च ॥
अनेनैव तु कर्त्तव्यं विनियोगः४ स उच्यते ।
निरुक्तं यस्य मन्त्रस्य समुत्पत्तिः प्रयोजनम् ॥

---

(क) ब्राह्मणेनेति सहार्थे तृतीया न कर्त्तरि तेन ब्राह्मणे तत्र वेदभागरूपेण उक्तलक्षणमन्त्रार्थस्तुत्यादिलक्षणरूपेण सह आर्षादि चतुष्टयं तेन पञ्चकमित्यर्थः ।

प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणं चाभिधीयते।
एवं पञ्चविधं प्रोक्तं जप्य कालेष्वनुस्मरेत्॥
होमे वा मार्जने यागे स्वाध्याये याजने तथा।

एवं पञ्चविधमित्युक्त्या च ब्राह्मणसहितानामेवार्षादीनां चतुर्णां जपकालेऽनुस्मर्त्तव्यता उक्ता एभिर्वचनैर्ऋष्यादिज्ञाना-वश्यकत्वं तेनैव ओङ्कारस्येत्यादिना विनियोगमाह।

किञ्च यत्तु सर्वेषामेव मन्त्राणाम् आदौ ऋष्यादिकं स्मृत्वा पश्चात् सन्ध्याप्रयोगः तदसत् एवं ह्यङ्गभूतेन ऋष्यादि स्मरणेन सह सर्वेषामेव मन्त्राणाम् आनन्तर्य्यं न्यायागतं बाध्यते न च प्राणायामेऽपि तत्तन्मन्त्र प्रागेव ऋष्यादि स्मरणं कार्य्यमिति वाच्यम् ओङ्कारस्य सप्तव्याहृतीनाञ्च गायत्र्याः शिरसश्च ऋष्यादिकं योगि याज्ञवल्क्येनैकत्रैव कथितं प्राणा-यामत्वेन तेषामैक्यात् तेन नैव दोषः। शिष्टाचारस्य प्रमाण-त्वाच्च अतएव प्रणवव्याहृति सावित्री शिरसाञ्च मिलिता-नामेव प्राणायामे विनियोगः।

इति अलं पल्लवितेन।

* (१) सू० तत्र ओङ्कारस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दो अग्निर्देवता शुक्लोवर्णः सर्वकमारम्भे विनियोगः सप्तव्याहृतीनां प्रजापति ऋषिर्गायत्र्युष्णिगनुष्टुप्बृहती पंक्ति त्रिष्टुप्जगत्य-श्छन्दांस्यग्नि वाय्वादित्या बृहस्पति वरुणेन्द्र विश्वेदेवा देवता अनादिष्ट प्रायश्चित्ते प्राणायामे विनियोगः २ गायत्र्या विश्वा-मित्र ऋषिर्गायत्रीच्छन्दः सविता देवताऽग्निर्मुखमुपनयने प्राणायामे विनियोगः ३ शिरसः प्रजापतिर्ऋषिस्त्रिपदा गाय-त्रीच्छन्दोब्रह्माग्निर्वायुः सूर्य्योदेवताः यजुः प्राणायामे विनि-योगः ४। (१) सू० *

तत्रोङ्कारस्य ऋष्यादौ प्रमाणं व्यासः।

प्रणवस्य ऋषिर्ब्रह्मा गायत्रीच्छन्द एव च।
देवोऽग्निः सर्वकार्य्येषु विनियोगः प्रकीर्त्तितः॥
एवमार्षादिकं स्मृत्वा तत ओङ्कारमभ्यसेत्। इति
वचनानादोङ्कारस्य ऋष्यादयो बोध्याः।

अथ सप्तव्याहृतीनाम् ऋष्यादौ प्रमाणम्।

जमदग्नि भरद्वाज भृगु गौतम काश्यपान्।
विश्वामित्र वशिष्ठाख्यौ व्याहृतीनां ऋषीन् विदुः॥
गायत्र्युष्णिगथानुष्टुप् बृहती पंक्त यः पुनः।
त्रिष्टुब्जगत्यौ छन्दांसि कथितानि मनीषिभिः॥ इति
यद्वा सप्तव्याहृतीनां जमदग्नि भरद्वाज भृगु गौतमात्रि
वशिष्ठः कश्यपाः प्रजापतिर्वा इत्याश्वलायनसूत्रात् ब्रह्मेति
बोध्यम्।

सप्तार्चिरनिलो सूर्य्यो वाक्पतिवरुणो वृषः।
विश्वेदेवाः क्रमादासां देवताः परिकीर्त्तिताः॥ इति
यद्वा सप्तानां प्रजापतिरिति विकल्पम्।

अथ गायत्र्या ऋष्यादौ प्रमाणमाह

गायत्र्या मुनिराख्यातो विश्वामित्रो महाद्युतिः।
गायत्रीच्छन्द इत्युक्तं देवता सविता स्मृतः॥ इति
शिरसः ऋष्यादौ प्रमाणम्।

शिरसोऽस्य मुनिर्ब्रह्मा छन्दोदेव्यादिका इति।
गायत्री परमात्मा स्याद्देवता कथितो बुधैः॥

इति वचनात् सर्वेषां मन्त्राणां यथायथ ऋष्यादयः। सूरिभिरूहनीयाः। अथाग्रे ऋष्यादीनां स्मृतिप्रमाणं न लिखिष्यामो ग्रन्थभूयस्त्वभयात् इत्यलं विस्तरेण।

* सू० इति ऋष्यादिकं स्मृत्वा बद्धासनः सम्मीलितनयनो मौनी प्राणायामत्रयं कुर्य्यात्। तत्र वायोरादानकाले

पूरकनामाप्राणायामः तत्र नीलोत्पलदलश्यामं चतुर्भुजं विष्णुं नाभौ ध्यायेत् धारणकाले कुम्भकः तत्र कमलासनं रक्तवर्णं चतुर्मुखं ब्रह्माणं हृदि ध्यायेत्। त्यागकाले रेचकः तत्र श्वेतं त्रिनेत्रं शिवं ललाटदेशे ध्यायेत्। त्रिष्वप्येतेषु प्रत्येकं त्रिस्त्रिर्मन्त्राभ्यासः प्राणायाम मन्त्रस्वरूपमाह। प्रत्येकमोङ्कारादि सप्तव्याहृतयः ओंकारादि सावित्री ओंकारद्वयमध्यस्थं शिरश्चेति तदेवाह। ओं भूः ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ओं आपो ज्योतिरसो मृतं ब्रह्म भूर्भुवः स्वरोम् इति। * मू०

इत्यव्ययमिवमर्थे क्त्वाप्रत्ययेनानन्तर्यार्थो लब्धः तेन ऋष्यादि स्मरणान्तरं बद्धासनः सम्मीलितनयन इति तत्र प्रमाणं बृहस्पतिः।

बध्वासनं नियम्य स्वं स्मृत्वा ऋष्यादिकं ततः।
सन्निमीलित दृङ्मौनी प्राणायामान् समभ्यसेत्॥

इति तच्च बद्धासन इत्युक्तं तत्रासनमाह।

स्वस्तिकासनमासीनो जप सिद्धिमवाप्नुयात्।
जान्वोरन्तरे कृत्वा सम्यक् पादतले शुभे॥
ऋजुकायः समासीनः स्वस्तिकासनमुच्यते।
पद्मासनं समासीनः सम्यक् सिद्धिं समाप्नुयात्॥

तल्लक्षणम्।

उत्तानौ चरणौ कृत्वा ऊरू संस्थौ प्रयत्नतः।
ऊर्वोर्मध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ॥
नासाग्रे विन्यसेद्दृष्टिं पद्मासनमिदं स्मृतम्।
आसनान्तराणि ग्रन्थ गौरवभीत्या नोक्तानि॥

अन्यच्च पूरकादीनां लक्षणानि आह

उक्तलक्षणपूर्वकमासनं बद्धा मौनी प्राणायामं कुर्य्यात् तत्प्रकारमाह याज्ञवल्क्यः पूरक रेचक कुम्भकैः प्राणायामस्त्रिलक्षणो ज्ञेय इति ।

अथ पूरकादीनां लक्षणानि आह ।

वाह्य वायोरन्तः प्रवेशनं पूरकः प्रवेशितस्य धारणं कुम्भकः धृतस्य वहिर्निःसारणं रेचकः ईडया पूर्यपिङ्गलया रेचनं यद्वा पिङ्गलया पूर्य ईडया रेचनं तत्र मानं व्यासः ।

प्राणस्य शोधयेन्मार्गं पूर कुम्भक रेचनैः ।
प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् ॥

इति भागवते देवहूतिं प्रति कपिलोक्तिः ।

नासिका कृष्ट उच्छासो ध्मातः पूरक उच्यते ।
कुम्भको निश्चलश्वासोरिच्यमानस्तु रेचकः ॥

तत्र ध्यानमाह

नीलोत्पलदलश्यामं नाभिदेशे प्रतिष्ठितम् ।
चतुर्भुजं महात्मानं पूरकेणैव चिन्तयेत् ॥
कुम्भकेन हृदि स्थाने ध्यायेच्च कमलासनम् ।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं पितामहम् ॥
रेचकेनेश्वरं ध्यायेत् ललाटस्थं महेश्वरम् ।
शुद्धस्फटिक सङ्काशं निर्मलं पापनाशनम् ॥

इत्यादि प्राणायामत्रयाणां ध्याने प्रमाणम् अन्यत्तु सर्वं स्पष्टम् ।

अथ प्राणायाममन्त्रव्याख्या तत्र तदुपयोगिकं धर्मशास्त्रमाह शरीरानन्दः ।

ज्ञातव्यः सर्वदेवार्थो वेदानां कर्मसिद्धये ।
पाठमात्रमधीता च पङ्के गौरिव सीदति ॥

इति पराशरः ।

वेदस्याध्यायनं सर्वं धर्मशास्त्रस्य चैव हि।
अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा॥

इति व्यासः मनुरप्याह।

योऽनधीत्यद्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वं आशु गच्छति सान्वयः।

इति पुनरपि मनुः।

वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।
इहैव लोके तिष्ठन् स ब्रह्मचर्याय कल्पते॥

एभिः शास्त्रैरर्थज्ञानसहितवेदाध्ययनं द्विजातीनां परम-श्रेयस्करमित्यवगतं तदशक्तौ स्नानसन्ध्यादिनित्यनैमित्तिकादिकर्मोपयोगिमन्त्राणां सार्थज्ञानाध्ययनमवश्यं कर्त्तव्यं तद्विना ब्राह्मण्यानुष्ठानासम्भवात्। तत्रापि पूर्वोक्तेषु कर्मसु सन्ध्यैव मुख्याऽतस्तद्व्याख्यानम् तत्रादौ प्राणायामो व्याख्यायते तत्र प्रथमं गायत्रीतदन्वय तया पश्चाद्व्याहृतयः गायत्र्यर्थमाह।

पदानि दशमन्त्रस्य तदादीनि यथाक्रमात्।
पदं प्रत्यर्थनिष्पत्तिः स्पष्टन्तु क्रियतेऽत्र हि॥

तदेव स्पष्टयति तदिति द्वितीयैकवचनम् अनेक जगदुत्पत्तिस्थितिलयकारणीभूतम् उपकथ्यमानं तेजः सूर्य्यमण्डलाभिधेयं परं ब्रह्माभिधीयते सवितुरिति षष्ठेकवचनं षूङ् प्राणिप्रसवे इत्यस्य धातोरेतद्रूपं सर्वस्य भूतजातस्य प्रसवितुरित्यर्थः। वरेण्यं ३ वरणीयं प्रार्थनीयं नियमादिभिरपगतकल्मषैः सततं ध्येयं भर्गः ४ भञ्जो आमर्दने भृजि भर्जते इत्येतयोर्धात्वोः भजतां पापभञ्जनहेतुभूतम् अथवा भ्राजदीप्तावित्यस्य धातोर्भर्गः तेज इत्यर्थः देवस्य ५ द्युति-

दानादिगुणयुक्तस्य निरतिशयस्येत्यर्थः दीप्यतेः प्रकाशार्थत्वात् ।

धीमहि ६ मध्ये चिन्तयामि निगमनिरुक्तविद्यारूपेण चक्षुषा योऽसावादित्ये हिरण्मयः पुरुषः सोऽहमिति चिन्तयामि धिय ७ इति द्वितीया बहुवचनं यः ८ इति छान्दसत्वाल्लिङ्गव्यत्ययः तत्तेजः सवितुर्देवस्य वरेण्यमस्माभिरभिध्यातं भर्गो जपतां पापभञ्जनहेतुभूतं धीमहि उपास्महे दृष्टाधिगमहेतुमानसप्रत्यय प्रवाह उपासना तद्विषयी कुर्म इत्यर्थः तत्तेजो नो८ऽस्माकं धियः बुद्धीः प्रचोदयात् श्रेयस्करेषु कर्मसु प्रेरयेदित्यर्थः। अक्षरयोजना बुद्धिमद्भिः करणीया। पण्डितकुलतिलक श्रीतारानाथतर्कवाचस्पतिकृतोऽयमर्थो गायत्र्या एव।

एवं गायत्रीमन्त्रस्यार्थमुक्त्वा व्याहृतियुक्ततयैव तस्य जप्यतया भर्गसमानाधिकरण्येन व्याहृतीनामर्थमाह ।

किम्भूतं तद्भर्गः ओं भूः भूलोकान्तस्वरूपं तदधिष्ठातृदेवता इत्यर्थः तत्र मानम् ।

भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च ।

तस्माद्भूरिति विज्ञेया प्रथमा व्याहृति स्मृतेति। एवं भुवादिसप्तलोकोदरवृत्ति स चराचर त्रैलोक्यस्वरूपं तदेवेत्यलम् ।

तत्र प्रमाणं

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभि संविशन्ति तद्विजिज्ञासस्व ब्रह्मेति श्रुत्या तस्यैव सर्वभूताधारत्वसिद्धेर्ब्रह्मण एव भूता धारादि भूम्यादि सप्तलोकरूपत्वम् इति दिक् पुनः किम्भूतम् आः अप्रूपत्वं ज्योतिरूपं रसः रसरूपं रस एवायं लब्ध्वाऽनन्दीभवतीति

स्तुतिः अमृतं मोक्षरूपं ब्रह्मभूरादीनामर्थस्तु पूर्वोक्त एव ओं इति ओङ्काररूपम् ओमित्येकाक्षरस्य ब्रह्मत्वप्रतिपादनात्।

* (१) सू० ततः सूर्य्यश्चेत्यस्य ब्रह्मर्षिः प्रकृतिश्छन्दः सूर्य्यो देवता अपामुपस्पर्शने विनियोगः ओं सूर्य्यश्च मामन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पन्तु यत्किञ्चित् दुरितं मयि इदमहमापोऽमृतयोनौ सूर्य्ये ज्योतिषि जुहोमि स्वाहा इत्यनेन प्रातराचामेत्। अग्निश्चेत्यस्य रुद्र ऋषिः प्रकृतिश्छन्दोऽग्निर्देवता अपामुपस्पर्शने विनियोगः ओं अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पन्तु यत्किञ्चिदुरितं मयि इदमहमापोऽमृत योनौ सत्ये ज्यातिषि जुहोमि स्वाहा १ इति सायमाचमनम्। * (१) सू०

ततः प्राणायामानन्तरमाचमने प्रमाणमाह याज्ञवल्क्यः प्राणस्य यमनं कृत्वा आचामेत प्रयतोऽपि सन्।

आन्तरं विद्यते यस्मात् तस्मादाचमनं स्मृतम्।

इति वचनात् प्राणसंयमनानन्तरमाचमनं सूर्य्यश्चेति

अथ प्राणायामानन्तरमाचमनमाह बौधायनः। सूर्य्यश्च मा मन्युश्चेति प्रातः पवित्रपाणिराचामेदिति। अस्यार्थः। मा मां रक्षन्ताम्। के, सूर्य्यश्च मन्युश्च मन्युर्यज्ञः मन्युपतयश्च यज्ञपतय इन्द्राद्याः। केभ्यो रक्षन्तां पापेभ्यः। किम्भूतेभ्यः मन्युकृतेभ्यः असाङ्गयज्ञभूतेभ्यः। यद्वा मन्युः क्रोधोऽत्र पक्षे क्रोधपतय इन्द्रियाणि क्रोधकृतेभ्यः पापेभ्यः क्रोधो रक्षन्ताम्। किमुक्तं भवति, ममैतादृशः क्रोधो मा भवतु येनाहमकार्य्यं करोमीति यत् किञ्चित् पापं रात्र्याम् अकार्य्यं

कृतवानस्मि, केन केन, मनसा वाचा हस्ताभ्यां पद्भ्याम् उदरेण शिश्ना तत्पापं रात्रिः अवलुम्पतु नाशयतु यत्किञ्चिन्मयि मदाश्रितं पापं तदिदमापः अहं सूर्ये जुहोमि किम्भूते, ज्योतिषि हृत्पद्ममध्यस्थितप्रकाशरूपे ज्योतिषि स्वाहा सुहुतं भवत्विति। मन्युर्दैन्ये क्रतौ क्रुधीति कोषः। शिश्नेति शिश्नेनेत्यर्थः। प्राप्ते सर्वे विधेयश्छन्दसि विकल्पन्ते इतीनादेशो न भवति आप इति सकारन्त आपशब्दोऽयमिति।

तत्र प्रमाणम्। श्रीमत् तर्कवाचस्पतिकृते शब्दस्तोममहानिधौ "आपस् न० आप असुन्। जले। आपोभिर्मार्जनम् इति स्मृतिः। सर्वमापो मयं जगदिति।

देवीमाहात्म्यम्।"

### सायं सन्ध्याचमनमन्त्रः।

ओं अग्निश्च मेत्यादि। अस्यार्थः अग्न्यादयः पापेभ्यो मा मां रक्षन्तां मन्युकृतेभ्यः असाङ्गभूतयज्ञेभ्यः क्रोधजनितेभ्यो वा यत् पापमहमह्ना दिवसेना कार्य्यं कृतवानस्मि। केन केन, मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना तत्पापं रात्रिरवलुम्पतु नाशयतु तथा मयि मदाश्रितं यत्किञ्चिद्दुरितं यावदेनं पापं तदिदं जलरूपं ज्योतिषि परमात्मनि जुहोमि। कीदृशे सत्ये तं स्वाहा सुहुतं भवत्विति वाक्यार्थः। सर्वमन्यत् पूर्ववत्। प्रातः सूर्य्यस्य दीप्यमानत्वात् सायमग्नेर्भासमानत्वाद् यथा योग्यं सूर्य्याग्नी प्रार्थ्येते।

* सू० तत आपोहिष्ठेत्यादित्र्यचस्य सप्तभिः पदैः शिरसि अष्टमेन भूमौ नवमेन पुनः शिरसि कुशत्रयेण जलं क्षिपेत्

इदमेव मार्जनम् आपोहिष्ठेत्यादितृचस्य सिन्धुद्वीप ऋषि-र्गायत्रीच्छन्द आपो देवता मार्जने विनियोगः। मू *।

तत आचमनान्तरं आपोहिष्ठेत्यादिभिर्मार्जनं कुर्य्यात् तत्र विभागमाह व्यासः विप्रुषोऽष्टौ क्षिपेन्मूर्ध्निः अधो यस्य क्षयाय चेति व्यासवाक्यावबोधपूर्वकं सप्तभिः पदैः। शिरसि अष्टमेन भूमौ तस्याष्टमवाक्यत्वात् नवमेन पुनः शिरसीति मूलवचनम्।

अन्यच्च देवीभागवते

आपोहिष्ठेति तिसृभिः प्रोक्षणं स्यात् कुशोदकैः।
ऋगन्ते मार्जनं कुर्य्यात् पादान्ते वा समाहितः॥

मार्जनफलमाह

नवप्रणवयुक्तेन आपोहिष्ठेत्यनेन तु।
नश्येदघं मार्जनेन संवत्सरसमुद्भवम्॥

तत्र तिसृणां ऋचां नव पादा भवन्ति तत्र पादादौ प्रणव-मुच्चार्य्य नवभिः पादैर्नववारं मार्जनं कुर्य्यादित्येकः पक्षः।

अन्यच्च छन्दोगपरिशिष्टे

शिरसो मार्जनं कुर्य्यात् कुशैः सोदकविन्दुभिरिति॥

यत्तु योगि याज्ञवल्क्येन

सार्द्धयर्चाधः प्रक्षिप्य सार्द्धयोर्द्धन्तु प्रक्षिपेत्।

इति विभाग उक्तः॥

स प्राचीनमार्जने

एवं सम्मार्जनं कृत्वा वाह्य शुद्ध्यर्थकारणम्।
अथाभ्यन्तरशुद्ध्यर्थं प्राणायामान् समभ्यसेत्॥

इत्युपसंहारात्।

एतच्च सम्मार्जनं स्नाना सामर्थ्यं सन्ध्यानुकूल शौचार्थ-मेव वाह्य शुद्ध्यर्थं कारणमिति श्रवणात्। अधिकफलार्थं

वा अतएव बहुभिरननुष्ठानमनावश्यकत्वात् कल्पान्तर
चेति परिभाव्यं प्राणायामानन्तरमार्जनन्तु सन्ध्यान्तर्गत
मिति दर्शितमेव अयमपि सन्ध्या मन्त्रक्रमे प्राणायाममन्त्रा
नन्तरमार्जनमन्त्रमाह आपोहिष्ठेति तिसृणाम् ऋचां समा-
हार इति तृचं तस्य तृचस्येत्यर्थः शेषं स्पष्टम्।

सू० * ओं आपोहिष्ठा मयो भुवस्तान ऊर्जे दधातन
महेरणाय चक्षसे १। * सू०

अथ मार्जनमन्त्रव्याख्या सूत्रं का० १६।३।१७। आपो-
हिष्ठेति पर्णकषाय पक्वमुदकं आसिञ्चति पिण्डे तथा च
स्मृतिरपि

आपोहिष्ठे तृचैः कुर्य्यान्मार्जनं तु कुशोदकैः।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे १॥

इत्यादि सूत्रे स्मृति प्रामाण्यात् कुशत्रयेणाप्‌विन्दुन्मस्तके
सिञ्चन् जपति आपोहिष्ठेति अब्देवत्या गायत्री सिन्धुद्वीपदृष्टा
हिशब्द एवार्थे प्रसिद्धौ वा यस्मादर्थो वा हे आपः या यूयम्
एव मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ मयः सुखं भाव-
यन्ति प्रापयन्ति ताः मयो भुवः यद्वा हि यस्मात् कार-
णात् मयो भुवः स्थ स्नपनादिहेतुत्वेन सुखोत्पादकत्व-
मपां प्रसिद्धं तादृश्यो यूयं नोऽस्मान् ऊर्जे रसाय भवदीय
रसानुभवार्थं दधातन स्थापयत धातूनामनेकार्थत्वात् स्थापने-
ऽपि तप्तनप्तनथनाश्चेति लोट्मध्यम बहुवचनस्य तन वा
देशे दधातन इति रूपं यथा वयं सर्वस्य भोग्यस्य रसस्य
भोक्तारो भवेम तथास्मान् कुरुत इति भावः। किञ्च महे
महते रणाय रमणीयाय चक्षसे दर्शनाय च अस्मान् दधात-
नेत्यर्थः। महत् रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणम्।
तदस्माकं कुरुत अस्मान् ब्रह्मसाक्षात्कारयोग्यान् कुरुत

इति भावः ऐहिकपारलौकिकसुखं ददतेत्यृचो भावः मह पूजायां मह्यते पूज्यते इति मट् क्विप् प्रत्ययः तस्मै महे रण-शब्दे रण्यते स्तूयते सर्वैरिति रणं तस्मैरणाय चष्टे पश्यति सर्वं येन इति चक्षः चक्षते रसुन् प्रत्ययः तस्मै चक्षसे यस्मिन् ज्ञाते सर्वं ज्ञातं स्यात् इति छान्दोग्य श्रुतेः।

अथ द्वितीयर्कं व्याख्यायते। हे आपः! वो युस्माकं यः शिवतमो रसः शान्ततमः सुखैक हेतूरसोऽस्ति तस्य रसस्य इहास्मिन् कर्मणि लोके वा स्थितान्नोऽस्मान् भाजयत भागिनो यूयं कुरुत तं रसं प्रापयत इति भावः तस्येति कर्मणि षष्ठी तत्र दृष्टान्तः उशतीर्मातरः इव उशन्ति ताः उशत्यः वा छन्द-सीति दीर्घः वशकान्ताविस्यस्माच्छतृप्रत्यये उगितश्चेति ङीष् उशत्यः कामयमानाः प्रीतियुक्ता मातर इव मातरो यथा स्वकीयं स्तन्यं रसं बालं पाययन्ति तद्वत् यूयं स्वरसं मातृ-स्थानापन्नाः वालस्थानापन्नान्नः अस्मान् प्रापयत इति भावः।

*सू॰ ओं यो वः शिवतमो रसः तस्य भाजयते हनः उशतीरिव मातरः ओं तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ आपो जनयथाचनः। *सू॰

अथ तृतीयर्चं व्याख्याति। तस्मा इति अलमिति प्राप्ते रेफस्य लकारः छान्दसः हे आपः! वो युष्मत् सम्बन्धिन-स्तस्य रसस्य पर्याप्तिं वयं गमामः गच्छेमः पर्याप्तिर्नाम रसविषये वै तृप्त्यं सदा तृप्तिर्वा तस्मै इति चतुर्थी षष्ठ्यर्थे यस्य क्षयाय जिन्वथ क्षयो निवास इत्याद्युदात्तत्वात् क्षय-शब्देन निवासः क्षयाय इति चतुर्थी षष्ठ्यर्थे यस्येत्यनेन सामानाधिकरण्यात्। क्षयस्य निवासस्य जगतामाधार-भूतस्य यस्याहुति परिणामभूतस्य रसस्यैकदेशेन यूयं ब्रह्मादि-

स्तम्बपर्य्यन्तं जगत् जिन्वथ तर्पयत जिन्वतिः प्रीतिकर्मा पञ्चाहुति परिणामक्रमेणेति भावः ३। सू० *

किञ्च हे आपः! नोऽस्मान् तत्र भोक्तृत्वेन जनयथ उत्पादयत आशिषि लोट् तद्रसभोक्तॄनस्मान् कुरुत इत्याजानदेवत्वमाशास्यते इति भावः।

अन्येषामपि दृश्यते इति संहितायां दीर्घः।

यद्वा अस्या ऋचोऽयमर्थः यस्य क्षयाय क्षयेण निवासेन यूयं जिन्वथ प्रीता भवथ तस्मै रसाय तद्रसाप्तये वो युष्मान् अरमत्यर्थं वयं गमाम प्राप्नुमः किञ्च हे आपः! यूयं नोऽस्मान् जनयथ प्रजोत्पादनसमर्थान् कुरुत गच्छतेर्लुङि उत्तमपुरुषस्य बहुवचनेन अगमामेति रूपम् अडभावः आर्षः बहुलं छन्दसि शपोलुकि लोटि वा रूपम्।

अत्र यद्यप्यापो हिष्ठानन्तरमघर्षणमुक्तं तथापि मध्ये द्रुपदा बोद्धव्या।

सर्वत्र मार्जनं कर्म अब्लिङ्गानामुदाहृतम्।

इति वचनात् ततः करेणेति। स्पष्टं सर्वम् किञ्च।

*सू० ततः करेण जलमादाय वारत्रयं द्रुपदां पठित्वा तज्जलं शिरसि क्षिपेत्। द्रुपदादि वेत्यस्य कोकिलो राजपुत्र ऋषिरनुष्टुप्छन्द आपो देवता सौत्रामण्यवभृथे विनियोगः। सू० *

ततस्तदनन्तरं द्रुपदा ऋष्यादिकं स्मृत्वा।
अपः पुण्याः समादाय त्रिः पठेत् द्रुपदा मृचम्॥
तत्तोयं मूर्ध्नि विन्यस्य सर्वपापैः प्रमुच्यते।

इति द्रुपदा प्रयोगः एवं ज्ञात्वा तु मन्त्राणाम् इत्यादिना सन्ध्याभिधानात्।

*मू० ओं द्रुपदादिव मुमुचानः खिन्नः स्नातो मला-दिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः । मू० *

अप् दैवत्यानुष्टुप् आपः जलानि एनसः पापात् मा मां शुन्धन्तु पुनन्तु पापात् पृथक् कुर्वन्त्वित्यर्थः । तत्र दृष्टा-न्तत्रयमाह द्रुपदादिव इति पलाशीद्रुद्रुमागमा इत्यमरोक्तेः द्रुस्तरुः तन्मयं पदं द्रुपदं पादुका तस्मात् मुमुचानः पृथक् भवन् यथा पादुकादोषैरसम्बद्धो भवति मुचेर्विकरणव्यत्ययेन शानचि जुहोत्यादित्वात् द्वित्वे मुमुचान इति रूपं यथाच खिन्नः खेदयुक्तः स्नातः सन् मलात् पृथक् भवति आज्यमिव पवित्रेण कवलमयेन पूतं गालितम् आज्यं घृतं कीटेभ्यः पृथक् भवति तथापो मां शुन्धन्तु इत्यर्थः ।

*मू० ततः करस्थं जलं नासायां संयोज्य आयतासुर-नायतासुर्वा त्रिः सकृद्वाघमर्षणं जपेत् अघमर्षणसूक्तस्या-घमर्षण ऋषिरनुष्टुप्छन्दो भाववृतं दैवतमश्वमेधावभृथे विनियोगः ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्र्य-जायत ॥ मू० *

अघमर्षणप्रयोगन्तु छन्दोगपरिशिष्टे दर्शितः करेणोद्धृत-सलिलं घ्राणमासज्य तत्र च जपेदनायता सुर्वा त्रिः सकृद्वा-घमर्षणमिति वचनावसङ्कलितमूलमङ्कनं ततः करस्थमित्यादि अनायता सुर्वेति छन्दोगपरिशिष्टे विकल्पबलादायता सुर-नायतासुर्वेति मूले अथाघमर्षणमन्त्रव्याख्या ऋग्वेदीयोऽयं मन्त्रः । तत्रादौ विनियोगविधिः ऋतमिति । त्र्यृचमेकोन-चत्वारिंशं सूक्तं मधुछन्दसः पुत्रस्याघर्षणस्यार्षमानुष्टुभं रात्र्या-दीनां भावानां सृष्ट्यादिप्रतिपादकत्वात्तादृग्रूप एवार्थो देवता तथा चानुक्रान्तम् ऋतं माधुच्छन्दसोऽघमर्षणो भाववृत्त तमानुष्टुभन्त्विति लिङ्गाद्विनियोगोऽवगन्तव्यः । अथ मन्त्र-

व्याख्या ऋतमिति सत्यनाम ऋतं मानसं यथार्थसङ्कल्पनं सत्यं वाचिकं यथार्थभाषणं चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते तत्सर्वमभीद्धादभितप्ताद् ब्रह्मणा पुरा स्रष्टव्यर्थं कृतात्तपसोऽधि अध्युपर्य्यर्थे उपर्य्यजायत उदपद्यत तपस्तप्त्वेदं सर्वमसृजतेति श्रुतेः तपश्चात्र स्रष्टव्य पर्य्यालोचनलक्षणं यस्य ज्ञानमयं तप इति श्रुत्यन्तरात् अभिपूर्वात् इन्धेः कर्मणि निष्ठा। श्वीदितो निष्ठायामिति इट् प्रतिषेधः गतिरनन्तर इति गतेः प्रकृतिस्वरत्वं स्वरितो वानुदात्ते पदादावित्येक देशः स्वर्य्यते।

यद्वा अभीद्धादभितः प्रकाशमानात्परमात्मनो मायाधिष्ठानरूपापादानभूतात् ऋतं सत्यञ्च अजायत जनिकर्त्तुः प्रकृतिरिति प्रकृतेरपादानसंज्ञा ततस्तस्मादेवेश्वराद्रात्री उपलक्षणमेतदह्नोऽपि अहश्च रात्रिश्च अजायत रात्रेश्चाजसाविति ङीष्। ततस्तस्मादेवेश्वरादर्णवोऽर्णं सोदकेन युक्तः समुद्रश्चाजायत समुद्रशब्दोऽन्तरीक्षो दध्योः साधारण इत्यभिमतार्थस्य प्रकाशनायार्णवशब्देन विशेष्यते अर्णसः सलोपश्चेति मत्वर्थीयो वप्रत्ययः सलोपश्चेति १। रूपसिद्धिश्छान्दसीति।

*मू० ततः समुद्रोऽर्णवः समुद्रादर्णवा दधि संवत्सरोऽजायत अहोरात्राणि विदधत् विश्वस्य मिषतो वशी॥२॥ मू०*

अर्णवात् समुद्रात् सृष्टा दधि ऊर्द्ध्वं संवत्सरः संवत्सरोपलक्षितः सर्वकालोऽजायत श्रूयते हि सर्वे निमिषा जज्ञिरे विद्युतः पुरुषा दधि काला मूहूर्त्ताः काष्ठाश्चेति स चेश्वरः अहोरात्राख्येतदुपलक्षितानि सर्वाणि भूतानि विदधत् कुर्वन् सृजन् अभ्यस्तानामादिरित्युदात्तत्वं ततः समासे कृदुत्तरपदप्रकृतिस्वरत्वं मिषतो निमिषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्त्तते। सूर्य्यचन्द्रमसौ

कालस्य ध्वजभूतौ दिवं च पृथिवीं च अन्तरिक्षं च इत्थं त्रिभुवनं स्वः स्व शब्दः सुखवाची दिवो विशेषणं सुखरूपां दिवमित्यर्थः। तदेतत् सर्वं धाता विधाता यथापूर्वं पूर्वस्मिन् काले अकल्पयत् सृष्टवान् तथैवागामिन्यपि कल्पे कल्पयिष्यतीति भावः।

*सू० सूर्य्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः इति तत् जलं वामभागे क्षिपेत्। सू० *

तज्जलं वामभागे क्षिपेदित्यत्र मानमाह।
उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत् कृते।
नीत्वा तं नासिकाग्रं तु वामकुक्षौ स्मरेदघम्॥
पुरुषं कृष्णवर्णञ्च ऋतं चेति पठेत्ततः।
द्रुपदां वा ऋचं पश्चात् दक्षनासापुटेन च॥
श्वासमार्गेण तं पाप मानयेत् करवारिणि।
नावलोक्यैव तद्वारि वामभागेऽस्य निक्षिपेत्॥
निः पापं तु शरीरं मे सजातमिति भावयेत् इति।

*सू० ततोऽन्तश्चरसीति तिरश्चीन ऋषिरनुष्टुप्छन्द आपो देवताऽपामुपस्पर्शने विनियोगः।

ओमन्तश्चरसि भूतेषु गुहायां विश्वतो सुखः।
त्वं यज्ञस्त्वं वषट्कार आपो ज्योतिरसोऽमृतम्॥

इत्यनेनाचमेत्। सू० *

ततः अघमर्षणानन्तरम् अन्तश्चरसीति मन्त्रेणाचामेत्। तत्र मानं शङ्खः।

उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन धर्मतः।

इति प्राणायामानन्तरमाचमनविधानादायतासु पक्षे शङ्खोक्तवचनमुपसंहर्त्तव्यमिति केचित्। एतच्चाचमनं मार्ज-

नानन्तरं श्रुतमपि ऋष्यन्तरोक्ताघमर्षणानन्तरमनुष्ठेयम्। इत्यघमर्षणानन्तराचमने मानमिति शङ्केनाप्येतदनन्तरं सूर्य्याञ्जलिदानाभिधानात् उपस्थानात् प्रागेवाचमनम् मन्त्रार्थस्तु स्पष्टतरमतो नो व्याख्यायत इति।

*सू० तत उत्थाय ओं भूर्भुवः स्वरिति गायत्र्या पुष्पमिश्रं जलं उत्क्षिपेत्। * सू०

तत आचमनानन्तरमुत्थायैकमञ्जलिं सूर्य्याय दद्यात् तत्र मानं छन्दोगपरिशिष्टे।

उत्थायार्कं प्रति प्रोहेत्त्रिकेणाञ्जलिमम्भसः।

प्रोहेदित्यस्य कोऽर्थः क्षिपेत् त्रिकेणेत्युक्तं तत्र किं तत् त्रिकमिति चेत्तत्रोच्यते प्रणवः१ भूर्भुवः स्वश्चेति२गायत्री च३ति त्रिकं तेनेत्यर्थः। एकाञ्जलिदानेऽपि पूर्वोक्तं पद्यं प्रमाणम्। तत्राञ्जलिमित्येकत्वस्य विवक्षितत्वात् अञ्जलित्रयदानमशुद्धम्। अत्र केचित् अञ्जलित्रयदानं वदन्ति तथा हि,

जलाञ्जलिं गृहीत्वा तु तर्जन्यङ्गुष्ठवर्जितम्।
वीक्ष्य भानुं क्षिपेद्वारि गायत्र्या चाभिमन्त्रितम्॥
त्रिर्वारं मुनिशार्दूल! विधिरेषोऽर्घमोचने।

इति वाक्यात् तन्न तत्रापि अञ्जलिम् इत्येकवचनस्यैव दृष्टत्वात्। यद्वा मध्याह्ने सकृदेवार्घदानं सन्ध्ययोरुभयोस्त्रिर्वारमित्यर्थः। ननु पुष्पाण्यम्बुमिश्राणि ऊर्द्ध्वं क्षिप्तोर्द्ध्वबाहुः सूर्य्यमुदीक्षेत् इति कात्यायनोक्तौ ऊर्द्ध्वबाहुरिति श्रवणात् मध्याह्नसन्ध्यायां,

सजलं पुष्पं देयं वा सन्ध्यात्रये इत्याशङ्कते तत्रोच्यते प्रातः सायं तोयमात्रं अनुपलब्धेः श्रुतेश्च।

तथा च तैत्तिरीय श्रुतिः

ब्रह्मवादिनः सन्ध्यायां गायत्र्याभिमन्त्रिताः।

अपः ऊर्ध्वमुत्क्षिपन्ति ताः एता आपो वज्रीभूता स्तानि रक्षांसि मन्देहारुणद्वीपे प्रक्षिपन्ति यत् प्रदक्षिणं प्रक्रामन्ति तेन पाप्मानमवधुन्वन्ति उद्यन्तमस्तं यान्तमादित्यमभिध्यायन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते इति श्रुतावप् मात्र श्रुते तथा श्रुतौ ऊर्ध्वं उत्क्षिपन्तीति श्रवणात् मूले उत्क्षिपेत्। तथात्र ऊर्द्ध्वबाहुविधानात्।

तदसंसक्तपार्ष्णिर्वा एकपादर्द्धपादपि।

कुर्य्यात् कृताञ्जलिर्वापि ऊर्ध्वबाहुरथापि वा॥

इति छान्दोगपरिशिष्टीयोपस्थाने कृताञ्जलित्वं सायं प्रातर्विषयं वा इति उदीच्चेतेति सूर्य्याभिमुखत्वे तात्पर्य्यं तेन मेघाद्याच्छन्नेऽपि सम्मुखमुपतिष्ठेत् उपस्थापयेदित्युपसंहारात् गायत्र्या च जपितयैवोपस्थानमन्त्रकरणकं हि देवताज्ञानं उपस्थानम् तच्च जपेऽपि सम्भवति अनर्थपरपदोच्चारणे जपपदं इति प्रायिकं अन्यत्रार्थपरत्वे प्रमाणाभावात् अतएव यथाशक्तीति नाना जप संख्यासम्भवात् युक्तं चैतत् पृथक्कात्यायनेन जपानभिधानात् ऋष्यन्तरसंवादाच्चेति आचारादर्श विचार्य्यं किं बहुना कथनेनेति दिक्।

*सू॰ ततो भूमिलग्नगुल्फतलभागो वा भूमिलग्नार्द्धचरणो वा भूमिलग्नैकचरणो वा प्रातःसायं च कृताञ्जलिर्मध्याह्ने ऊर्द्धबाहुः सूर्य्यं ध्यायन्नुपतिष्ठेत् एभिर्मन्त्रैः। उद्वयमित्यस्य प्रस्कण्व ऋषिरनुष्टुप् छन्दः सूर्य्यो देवता सूर्य्योपस्थाने विनियोगः। ओं उद्वयं तमसः परिस्वः पश्यन्त उत्तरं देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् १॥ *सू॰

सूर्य्यदैवत्यानुष्टुप् प्रस्कण्व दृष्टा वयं तमसः परितमसः सकाशात् तमो बहुलादस्माल्लोकात् उदगन्म उन्नताः निर्गताः

गमेर्लङि अपि लुप्ते मस्य नः कीदृशा वयं उत्तरं उत्कृष्टतरं स्वरित्यव्ययं स्वर्गे स्वः स्वर्गं पश्यन्त ईक्षमाणाः किञ्च देवत्रा देवलोके सूर्य्यं पश्यन्तः सन्तः उत्तमं ज्योतिः ब्रह्मरूपं उदगन्म प्राप्ताः इत्यर्थः। १एतन्मन्त्रविनियोगे हिरण्यस्तूप ऋषिरिति वदन्ति तद्भाष्यविरोधादुपेक्ष्यम्।

*सू० उदुत्यमित्यस्य प्रस्कण्व ऋषिरनुष्टुप् छन्दः सूर्यो देवता सूर्य्योपस्थाने विनियोगः ओं उदुत्यं जतवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यम् २। * सू०

सूर्य्यदैवत्या गायत्री अनुष्टुप् प्रस्कण्व दृष्टा उदुत्यमिति उनिपातः शीघ्रार्थे पादपूरणे वा त्यमिति त्यच्छब्दश्छान्दसः तच्छब्दार्थे केतवः किरणाः प्रज्ञाहेतवो रश्मयः त्यं तं प्रसिद्धं सूर्य्यं देवं दीप्तियुक्तं उद्वहन्ति उदयाचलात् उन्नमयन्ति इत्यर्थः। देवो दानात् द्योतनाद्वेति यास्कः कथम्भूतं सूर्य्यं जातवेदसं जनानां प्रजानां वा ज्ञातरं यद्वा जातं वेदं धनं ज्ञानं वा यस्मात्तं किमर्थं विश्वाय दृशे षष्ठ्यर्थे चतुर्थी विश्वस्य दर्शनाय जगद् द्रष्टुमित्यर्थः २।

* सू० चित्रमित्यस्य कौत्स ऋषिस्त्रिष्टुप्छन्दः सूर्य्योदेवता सूर्य्योपस्थाने विनियोगः ओं चित्रं देवानामुदगादनीकञ्चक्षुमित्रस्य वरुणस्याग्नेः आप्राद्यावा पृथिवीं अन्तरिक्षꣳसूर्य्य आत्मा जगतस्तस्थुषश्च ॥ ३ ॥ सू० *

सूर्य्यदैवत्यास्त्रिष्टुप् कौत्स दृष्टा चित्रमिति सूर्य्यः चित्रमाश्चर्य्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छतिर्वा लडर्थे लुङ् उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्यादत्ते इत्याश्चर्य्यं कथम्भूतः सूर्य्यः देवानां दीव्यन्ते इति देवाः किरणास्तेषामनीकं मुखं आश्रयं यद्वाऽनीकं समूहः किरणपुञ्ज इत्यर्थः। मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत् प्रका-

शक इत्यर्थः। मित्रादयः उपलक्षकाः तेन सर्वस्य सदेव-मनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभिव्यज्यन्ते अतो मित्रा-दीनाञ्चक्षुः ससूर्य्यः उद्गतः सन्द्यावा दिवं भूमिञ्च अन्तरिक्षं आप्राः आपूरितवान्। आप्राः इति प्रापूरणे अदादिकः लङि व्यत्ययेन मध्यमः यद्वा लड़र्थे लुङ्॥ आपूरयति स्वतेजसा वा इति शेषः। स्वाधिष्ठानरूपे स्वाभेदेन विद्यमानं कल्पय-यति एवमपररूपेण स्तुत्वा पररूपेण स्तौति किम्भूतः सूर्य्यः जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगतः आत्मा अन्त-र्यामी यमेतमादित्ये पुरुषं वेदयन्ते सरुद्रः सप्रजापतिस्तद् ब्रह्मेति श्रुतेः सूर्य्योऽद्वैतमनेनोच्यते इति भावः।

* मू॰ तच्चक्षुरिति दध्यङ्ङार्थर्वण ऋषिरक्षरातीत पुर उष्णिक्छन्दः सूर्य्यो देवता सूर्य्योपस्थाने विनियोगः ओं तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतꣳश‍ृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ४॥ मू॰ *

तत् चक्षुर्जगतां नेत्रभूतमादित्यरूपं पुरस्तात् पूर्वस्मि-न्निति पुरस्तात् पूर्वदिशि उच्चरत् उच्चरति उदेति छान्दसत्वा-दिकारलोपः। तत्र मानं इतश्च लोपः परस्मैपदेष्विति इकार-लोपः कीदृशं तत् देवहितं देवैर्हितं स्थापितं यद्वा देवानां हितं प्रियं शुक्रं शुक्लं पापा संस्पृष्टं शोचिष्मद्वा तस्य प्रसादात् शतं शरदः वर्षाणि वयं पश्येम प्रार्थनायां लिङ् अत्यन्त-संयोगे द्वितीया। तेन शतवर्षपर्य्यन्तं अव्याहतचक्षुरिन्द्रिया-भवेम शतं शरदो जीवेम अपराधीनजीवनाभवेम शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रियाभवेम शतं शरदः प्रब्रवाम अस्खलि-तवागिन्द्रियाभवेमशतं शरदः अदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्य्याम शतात् शरदः शतवर्षोपर्य्यपि भूयश्च बहुकालं

पश्येम अर्थात् शतवर्षादूर्द्ध्वमपि पश्येम अव्याहतचक्षुरादी न्द्रियाभवेमेत्यर्थः ४।

* मू० ततः ओं ओं हृदयाय नमः ओं भूः शिरसे स्वाहा ओं भुवः शिखायै वषट् ओं स्वः कवचायहुं ओं भूर्भुवः स्वः नेत्रत्रयाय वौषट् ओं भूर्भुवः स्वरस्त्राय फट् इत्यङ्गानि त्रिरावर्त्य पूर्वोक्त ऋष्यादिकं स्मरेत्। तद् यथा—

ओङ्कारस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दोऽग्निर्देवता शुक्लो वर्णो जपे विनियोगः १। त्रिव्याहृतीनां प्रजापतिर्ऋषिर्गायत्री उष्णिगनुष्टुभश्छन्दांꣳसि अग्निर्वायुरादित्यो देवता जपे विनियोगः २ गायत्र्या विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवताग्निर्मुखमुपनयने जपे विनियोगः ३ इति ऋष्यादिकं स्मृत्वा ध्यायेत्।

ओं श्वेतवर्णा समुद्दिष्टा कौशेय वसना तथा।
श्वेतैर्विलेपनैः पुष्पै रलङ्कारैश्च भूषिता।
आदित्यमण्डलान्तःस्था ब्रह्मलोक गताथवा।
अक्षसूत्रधरा देवी पद्मासनगता शुभा॥ इति मू०*

अथ गायत्री जपविधानमाह याज्ञवल्क्यः

सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः।

इति उपस्थानानन्तरमेव गायत्री जपः।

अतस्तत् प्रकारमाह सैव

प्रणवो भूर्भुवः स्वश्च स्वाङ्गानि हृदयादयः।
त्रिरावर्त्य ततः पश्चादार्षं छन्दश्च दैवतम्॥
विनियोगस्तथा रूपं ध्यातव्यं क्रमशस्तु वै॥

इत्येतन्मूलक एव तत ओमित्यारभ्य विनियोगान्तः पाठः। निर्वाणतन्त्रे,

प्रणवद्वयं हि हृत्पद्मे भूकारं शीर्षदेशके।

भुवः शिखायां स्वः कारं कवचे विन्यसेत् सुधीः ॥
नमः स्वाहा वषट् कूर्चं वौषट् फट् क्रमतो न्यसेत् ॥

योगियाज्ञवल्क्योक्तेरधिकं त्याज्यं तन्त्रोक्तत्वात् तन्त्रस्या-वैदिकत्वात् न प्रमाणम् । शारदायां अङ्गान्याह,

ब्रह्मणे हृदयं प्रोक्तं विष्णवे शिर ईरितम् ।
शिखा रुद्राय कवचं ईश्वराय समीरितम् ॥
नेत्रं सदाशिवायोक्तं अस्त्रं सर्वात्मने स्मृतम् ॥

एतदङ्गन्यासं केचिन्नेच्छन्ति तस्यावैदिकत्वात् अत्र केचि-दिति पदेनाकरणे प्रत्यवायो नास्ति कृते त्वभ्युदय इति सूचितमन्यथा एतं न्यासविधिं केचिन्नेच्छन्ति जप तत्परा इत्यत्र केचिदिति कथनस्य वैयर्थ्यापत्तेः । अन्यच्च

वेदा विरोधि चेत्तन्त्रं तत् प्रमाणं न संशयः ।
प्रत्यक्षं श्रुतिरुद्धं यत् तत् प्रमाणं भवेन्न च ॥
सर्वथा वेद एवासौ धर्ममार्गप्रवर्त्तकः ।
तेनाविरुद्धं यत् किञ्चित् तत् प्रमाणं न चान्यथा ॥

तदेवाह तत इति मूलार्थः स्पष्टतरः अतएव नोच्यते इति । त्रिरङ्गावर्त्तनानन्तरं ऋष्यादीनां स्मरणम् तदेवाह ओंकारस्येत्यादि ऋष्यादिस्मरणानन्तरं ध्यानमाह श्वेतवर्णेति ।

* मू० तेजोसीति देवा ऋषयः शुक्रं दैवतं गायत्री छन्दो गायत्र्या वाहने विनियोगः ओं तेजोसि शुक्रमस्य मृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसीत्या वाह्य उपतिष्ठेत् । मू० *

तद्ध्यानं द्विविधं तान्त्रिकं वैदिकञ्च । तत्र तान्त्रिकं तु प्रोक्तं श्वेतवर्णेत्यादिना वैदिकमाह तेजोसीति । हे गायत्रि ! त्वं तेजोसि शरीरकान्तिहेतुत्वात् तेजस्त्वं शुक्रमसि दीप्तिमदसि स्निग्धरूपत्वाद्दीप्तिमत्वं त्वत् सेवनकर्त्ता सर्वस्य

स्नेही भवतीति भावः। अमृतमसि विनाशरहितमसि ब्रह्मरूपत्वात् धामस्थानमसि धीयते स्थाप्यते चित्तवृत्ति दैवैरत्रेति धाम तथा नाम नामयति आत्मानं प्रति सर्वाणि भूतानि इति नाम त्वत् सेवकं दृष्ट्वैव सर्वे नमन्तीति भावः तथा देवानां प्रियमिष्टं त्वं काकाक्षिगोलन्यायेन देवाना मित्यस्य उभयत्र सम्बन्धः तथा देवानामनाधृष्टं अनभिभूत तथा देवयजनं देवा इज्यतेऽनेनेति देवयजनसाधनं ईदृश त्वमसि अतस्त्वां जपार्थमावाहयामीति शेषः।

* मू॰ ओं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्य पदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परो रजसे सा वदो मा प्रापदिति इत्युपस्थाय प्रातः प्राङ्मुखो मध्याह्ने सूर्य्याभिमुखस्तिष्ठन् सायं पश्चिमाभिमुख उपविष्ट उक्तजपविधिना गायत्रीं जपेत्। * मू॰

आवाहनानन्तरमुपस्थानमाह गायत्रीति उपस्थानं उपेत्य स्थानं नमस्करणमनेन मन्त्रेण इति कोऽसौ मन्त्र इत्याह हे गायत्रि! त्वम् असि भवसि त्रैलोक्यपादेनैकपदी त्रयी विद्यारूपेण द्वितीयेन द्विपदी प्राणादिना तृतीयेन त्रिप- द्यसि चतुर्थेन तुरीयेण चतुष्पद्यसि एवञ्चतुर्भिः पदैरुपासकैः पद्यसे ज्ञायसे अतःपरं परेण निरुपाधिकेन स्वेनात्मनाऽपदसि अविद्यमानं पदं येन पद्यसे सा त्वम् अपदसि यस्मान्न हि पद्यसे नेति नेत्यात्मत्वात् अतो व्यवहारविषयायते तुरीयाय पदाय नमः कथम्भूताय दर्शनाय दृदृशे इव दृश्यते इव इति दर्शताय अनेन गायत्र्या ब्रह्मत्वं सूच्यते।

तत्र प्रमाणं,

हि एष मण्डलान्तर्गत पुरुषोऽतो दर्शतं पदमुच्यते॥

इति श्रुतिः।

पुनः किम्भूताय परो रजसे रजसः परमिति परो रजा तस्मै परो रजसे छान्दसः प्रयोगोयम् परोक्षे इति वत्।

गायत्र्युपासनासंग्रहविषयमेव मन्त्रमैहिकफलविशेषोपायकथनार्थमवतारयति हे गायत्रि! त्रैलोक्यात्मकपादेनैकपदी असि त्रैविद्यरूपपादेन त्वं द्विपदी प्राणाद्यात्मकपादेन त्वं त्रिपदी मण्डलान्तर्गतपुरुषरूपेण त्वं चतुष्पदी। परेण निरुपाधिकेन स्वेनात्मना अपदसि पद्यसे ज्ञायसे येन तत्पदं न विद्यते यस्याः सा त्वम् अपदसि। कुतः हि यस्मात् केनापि न पद्यसे न ज्ञायसे नेति नेत्यादिलक्षणत्वात् तादृग् रूपस्य च चक्षुराद्यविषयत्वात् अतस्त्वमपदसि। अथ पादत्रयापेक्षया चतुर्थपादस्य प्राधान्यमभिप्रेत्य तस्य नमस्करणमुच्यते नम इति। एवं नमस्करणमुक्त्वा शेषेण यथोक्त नमस्कार प्रयोजन मुच्यते। असौ शत्रुः पाप्मा त्वत् प्राप्तिविघ्नकरः अदः पापरूपस्य शत्रोर्यत् तत् प्राप्तिविघ्नकर्तृत्वं मम तच्च मा प्रापत् मा प्राप्नोतु इति शब्दः पापक्षयफलोपस्थानमन्त्र परिसमाप्त्यर्थः इति कथं भूताय तुरीयाय पदाय दर्शताय दृश्ये इव दृश्यते इव न तु साक्षात् दृश्यते ईश्वरस्यातीन्द्रियत्वात् अतस्तद्दर्शतं तस्मै पुनः किम्भूताय प्रवृत्तिकारणीभूतः सङ्गात् समुत्पद्यमानो रञ्जनात्मको रागो रज इत्युच्यते। यद्वा सर्वे लोका रजः शब्देनोच्यते। रज्यमानत्वात् सर्वमेव वै प्रसिद्धं रजो जातमुपर्युपरि हि तस्मादेष सविता तपति रजः शब्द वाच्यात् सर्वस्मादुपरिष्टादेव तपन् वर्त्तते इति यावत्। अतो रजसः पर इति परो रजा तस्मै परो रजसे रूपसिद्धिश्छान्दसी।

* मू० जप्यरूपमाह ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् ओम्। म० *

गायत्र्युपस्थानानन्तरं गायत्र्या जप्य प्रकारमाह योगियाज्ञवल्क्यः,

ओङ्कारं पूर्वमुच्चार्य्य भूर्भुवः स्वस्तथैव च।
गायत्री प्रणवश्चान्ते जपो ह्येष उदाहृतः॥

इति तेनाद्यन्तयोः प्रणवो जप्यः तत्र प्रणवस्य ब्रह्मवाचकत्वमाह गीतायां,

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।

पातञ्जलसूत्रेऽपि ईश्वरमुपक्रम्य तस्य वाचकः प्रणव इत्युक्तं ततश्चाद्यन्तयोर्जप्य प्रणवयोर्मध्ये आद्यस्य उपाङ्गतया निरर्थकत्वम् अन्यस्य ब्रह्मविष्णुमहेश्वर तुरीयत्वं नृसिंहतापिन्यां स्पष्टमुक्तम्। तेन भर्गविशेषणं यद्वा आद्यस्य ब्रह्मादिरूपत्वं द्वितीयस्य परब्रह्मरूपत्वं ओं शब्दस्य आङ् पूर्वकवेञो निष्पन्नतया सर्वत्रानुस्यूतवाचकत्वात् यस्मिन् नोतं प्रोतश्चेत्यादि श्रुतेः तस्यैव सर्वत्र सूत्रात्मतया स्थितेः। गायत्रीजपप्रकारस्त्रिविधः सम्पुटैक षड़ोङ्कारः भेदात् सम्पुटा एक ओङ्कारा षड़ोङ्कारा तत्रैकोङ्कारा गायत्री ब्रह्मचारिणा गृहस्थेन च जप्या तदुक्तं व्यासेन,

सम्पुटैका षड़ोङ्कारा गायत्री त्रिविधा मता।
तत्रैक प्रणवा ग्राह्या गृहस्थैर्ब्रह्मवादिभिः॥
गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत्।
अन्तेयः प्रणवं कुर्यात् नासौ वृद्धिमवाप्नुयात्॥
सम्पुटा च षड़ोङ्कारां गायत्रीं प्रजपेद् यतिः॥ इति।

अथ गायत्री व्याख्यानमाह शरीरानन्दः।

यः सविता जगज्जन्मादिकर्त्ता नः अस्माकं धियः बुद्धीः उपलक्षणमेतत् सर्वेन्द्रियाणि स्वतत्त्वविषयं ज्ञानं गुरुमुखेनोपदिश्यते तज्ज्ञानसाधनानि सर्वाणि करणानि प्रचोद-

यत् प्रचोदयति स्वात्मविषयतया प्रेरयति तस्य सवितुर्देवस्य क्रीड़ादिगुणसम्पन्नस्य नारायणस्य अनन्याधीनतया तत् तत्वात् व्याप्तत्वात् वरेण्यं सकलगुणाकरतया परममङ्गलं भर्गः ज्योतीरूपं भरणगमनयोगात् सर्वज्ञं वा वपुः ज्ञानानन्दगुणरचितकरणाद्यवयववत् ध्यानमेव ज्ञानसाधकं न कर्मादिकम् इत्यतो धीमहीति पदं कर्मणां शुद्धान्तकरणस्य ध्यानसम्भवात्। धीमहि ध्यायेम ज्ञानमेव प्रीतिजनकं न कर्मादिकं तस्मात्तच्चिन्तनं कर्त्तव्यमित्यर्थः। किम्भूतं तेजः ओं ब्रह्मादिरूपमिति पुनः किम्भूतं भूर्भुवः स्वः व्याहृत्यादिकत्रयात्मकं यद्वा तदर्थभूतलोकत्रयात्मकं वा पुनः कथम्भूतं ओं परब्रह्मरूपात्मकमित्यर्थः। अत्र गायत्री प्रतिपाद्यं परं ब्रह्मैव न सूर्य्यः तस्य चक्षोः सूर्य्यो अजायतेति श्रुत्या तदङ्गजननोक्तेः अनेनैव मन्त्रेण चतुः सूत्री व्याख्याता धीमहीति पदेन अथातो ब्रह्म जिज्ञासा इति जिज्ञासैव धीमहीति वेदविचारनिर्णीतगुणोपसंहाररूपत्वात् सवितुरिति पदेन जन्माद्यस्य यत इति उपक्रमोपसंहारादितात्पर्य्यलिङ्गात् तत्तु समन्वयादित्यपि तदन्तर्गतमेव देवस्येत्यनेन शास्त्रयोनित्वादिति व्याख्यातमित्यलम्।

द्वितीयार्थमाह विश्वामित्र दृष्टा गायत्री तदिति षष्ठ्यर्थे तस्यदेवस्य द्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामिणो विज्ञानानान्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य वा आदित्यान्तर्गतपुरुषस्य वा ब्रह्मणो वरेण्यं वरणीयं सर्वैः प्रार्थनीयं भर्गः सर्वपापानां सर्वसंसारस्य च भर्जनामसामर्थ्यं तेजः सत्यज्ञानादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः छान्दसं सम्प्रसारणं यद्वा मण्डलं पुरुषो रश्मयः इति त्रयं भर्गशब्दवाच्यं भर्गो वीर्य्यं वा वरुणाद्वा अभिषिषिचानाद्भर्गो-

ऽपचक्राम वीर्य्यं वै भर्ग इति श्रुतेः तस्य कस्य यः सविता नोऽस्माकं धियः बुद्धीः कर्माणि वा प्रचोदयात् प्रकर्षेण चोदयति प्रेरयति सत्कर्मानुष्ठानायेत्येकोऽर्थः १ यद्वा वाक्यभेदेन योजना सवितुर्देवस्य तद्वरेण्यं भर्गो ध्यायामः। यश्चनो बुद्धीः प्रेरयति तञ्च ध्यायामः स च सविता एवेति द्वितीयोऽर्थः २। लिङ्गव्यत्ययेन वा योजना सवितुर्देवस्य तद्भर्गो धीमहि ध्यायामः यो यत् भर्गो नो बुद्धीः प्रेरयति इति तृतीयोऽर्थः३। सव्याहृतीकमन्त्रस्य व्याख्यानन्तु पूर्वमुक्तं विश्वामित्रकल्पोक्ता गायत्री मन्त्रार्थमाह,

देवस्य सवितुस्तस्य धियो योनः प्रचोदयात्।
भर्गो वरेण्यं तद् ब्रह्म धीमहीत्यत उच्यते॥

* सू० ततः प्रणिपत्य विसर्जयेत् देवा इति मनसस्पतिर्ऋषिर्विराट् छन्दः वायुर्देवता गायत्री विसर्जने विनियोगः ओं देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः इति विसर्जनम्। इति सन्ध्याप्रयोगः। सू० *

ततः तदनन्तरं विसर्जनमन्त्रव्याख्यानं वातदेवत्या विराट् मनसस्पति दृष्टा कै गै शब्दे गीयते नानाविधैर्वैदिकैर्मन्त्रैः प्रतिपाद्यते इति गातुर्यज्ञः जपरूपः तं विदन्ति जानन्तीति गातुविदः तत् सम्बोधने हे देवाः! एकवचने बहुवचनं छान्दसत्वात् हे देवाः! इति सम्बोधनेन गायत्र्याः पुंस्त्वं तदुपाधिविशिष्टब्रह्मणः प्रतिपादकत्वात्। गातुं वित्वा यज्ञं जपयज्ञं जपयज्ञं समाप्तं विदित्वा गातुमित गाङ् गतौ गायते गम्यते यत्र स गातुर्मार्गः तं इत गच्छत एवं गायत्री मुक्त्वा तत प्रतिपाद्यं ब्रह्माह हे मनसस्पते! अस्मदीयस्य मनसो यष्टुं प्रेरणेन पालक परमेश्वर हे देव! इमं मदनुष्ठितं जप-

रूपं यज्ञं स्वाहा त्वद्धस्ते दधामि त्वं वाते धाः वायुरूपे देवे यज्ञं धेहि स्थापय अर्थात् वायु सर्वत्र गो महान् इति वचनात् सर्वव्यापको वायुर्यत्र यत्र गच्छामि तत्र तत्र मां रक्षत्वित्यभिप्रायः एकवचने बहुवचनं स्त्री सम्बोधने पुरुषसम्बोधनं तत्र मानमाह भगवान् भाष्यकारः सुप्तिङुपग्रहलिङ्गनराणां कालहलच् स्वरकर्तृजङाञ्च व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेनेति।

इति सन्ध्याप्रयोगः॥

---

श्रीः अथ मामकाः श्लोकाः ।

---

शाण्डिल्यगोत्रे नितरां पवित्रे
पवित्रकर्मा व्रजलाल सूनुः ।
पितामहो यस्य बभूव देवी
दत्तः पिता यस्य गुलाब शर्मा ॥
जजान यं कुन्दनिका विसृष्टा
सन्ध्यार्थदीपा ततु शर्मणा वै ॥ १ ॥
प्राचीनैर्यत् कृतं पूर्वं संध्या कर्म यथाविधि ।
तत्तु नो वुद्धिदौर्बल्याज्ज्ञातं तस्मादियं कृता ॥ २ ॥
पुनरुक्तिं परित्यज्य क्रमेणेयं कृता मया ।
माधवस्य सुबोधाय न तु पण्डित्य गर्वितः ॥ ३ ॥
अत्राप्रमाणं यत्किञ्चित् प्रमादाल्लिखितं मया ।
विद्वद्भिः सुविचार्यैं तच्छोधनीयं दयालुभिः ॥ ४ ॥
मया संध्यार्थदीपायाः संग्रहो वहुभिः कृतः ।
ग्रन्थै रनेकटीकाभिरुद्धृतो माधवाय वै ॥ ५ ॥
बहुखेदान् मया त्वत्र माधवार्थव्ययात् पुनः ।
नियोजना यथास्थाने कृता विद्वद्भिरीक्ष्यताम् ॥ ६ ॥

कोऽसौ माधव इति चेत्तत्रग्रह श्रीगोवर्द्धनधारिपादकमलद्वंद्वे बहुप्रातिमान् यो गोवर्द्धनधारिशब्दसहितो लालोऽस्ति चूरूपुरे तत् सूनू रघुनन्दनः सुधनवान् चेमान्ववायोद्भवस्तत् सूनुः श्रुतिशास्त्रधर्मकुशलो धर्मार्थविन्माधवः ॥ ७ ॥

टी अथ लोकविदित प्रसिद्धनामान्याह चेमकान्ववाये वंशे उद्भवः उत्पत्तिर्यस्य सः एतादृशो गिरिधारिलालः चूरूनगरेऽस्ति तत्सूनूरघुनन्दनो रामचन्द्रः तत्सूनुर्माधव इत्यर्थः ॥ ७ ॥

संध्यार्थज्ञो यथा संस्थामिति तेन नियोजितः।
शरीरानन्दशर्मा निरमात् संध्यार्थदीपिकाम् ॥ ८ ॥
संध्यार्थदीपिकां विप्राः पठन्तु मा पठन्तु वा।
मया साधवबोधाय कृतेऽयं न हि सर्वशः ॥ ९ ॥
मङ्गलं भगवान् विष्णु० १० लाभस्तेषां जयस्ते० ॥११॥
रामाग्निनवभूवर्षे शरीरानन्दशर्मणा।
नभः शुक्लशरे पूर्णा कृता संध्यार्थदीपिका ॥ १२ ॥

इति श्रीशरीरानन्दविरचिता संध्यार्थ-
दीपिका समाप्ता।

---

उक्ता द्वादशवर्णास्वेकैकोऽसौ तत्र वर्णकः। पञ्चस्वरयुतो ग्राह्यः सावर्ण्यो दशभेदभाक्॥ अ आ इ ई उ ऊ ए ऐ ओं औं स्वरैस्तु मिश्रितः षणवेत्यत्र षकारो मूर्द्धन्यो न कवर्गजः २ ऋ ॠ ऌ ॡ स्वरा एतेनामादौ प्रायशो न हि ऋषिदत्ताभिधश्चेत्तु-रेके व्यञ्जनवत् तदा तु ब्रह्मदतश्रीधरादौ संयोगाक्षरनामनि प्राप्त्यां तस्यादिमं वर्णं इत्युक्तं ब्रह्मयामले ४ विसर्गविन्द्वादिकं तु नाचरस्य विकारकृत् बकारो वकारवच्चारम्भसिद्धौ निरूपितं इति राशिनिर्णयः।

---

टश पृष्ठाका चारि पंक्तिका पर वुटिपत्रम् ।

अथापवित्र इत्यादि पद्यस्य द्वितीयार्थं पाठभेदश्चाह,

* मू० अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं सवाह्याभ्यन्तरः शुचिः ॥ मू० *

वा इवार्थे पवित्रः कृतप्रायश्चित्त इव अपवित्रः कृकृत-प्रायश्चित्तोऽपि शुचिः कर्माधिकारी भवेदिति केचित् अन्ये तु अपविचः कुशरहितः पवित्रः कुशसहितो वा तथा च हरि-स्मरणे कुशधारणस्यानपेक्षेति वदन्ति परे तु यथा स्नाना-दिजन्याशुद्धिरपेक्षिता तथा हरिस्मरणजन्यापि तथा च संध्या-वन्दनादिरहितस्याधिकारस्तद्युक्तस्य तु फलातिशयः स्मरणं त्वावश्यकमेव तज्जन्य शौचेनाधिकारादिति वदन्ति रोगादि-निमित्तकस्नानाद्यसामर्थ्ये जला प्राप्तौ वा अस्पृश्य स्पर्शदशाया-मपि हरिस्मरणाच्छुद्धिरित्याह । सर्वावस्थामिति सर्वा अशेषा अवस्था च आवश्यकस्नानान्तरादि अनाचरण दशा तां गतः प्राप्तः अपि पदं गार्हायां द्वितीयान्तम् अवस्था विशे-षणं गर्हितामित्यर्थः । सवाह्याभ्यन्तरः वाह्याभ्यन्तरसहितः वाह्याभ्यन्तरेऽवस्त इति अच्प्रत्ययः । वाह्यं सितवस्तुधारणम् अन्तःशौचं मनसो विषयान्निवृत्तिः ततश्चैतत् द्वितया सामर्थ्ये-ऽपि विष्णुस्मरणजन्यशौचमेव तदुभयकार्य्यं करोति यथा,

सितवस्त्रोपवीते च सितमाल्यानुलेपने ।
परिधायाचरेत् कर्म समाहित मनास्तथा ॥

स्मरणन्तु तद्विष्णोरिति मन्त्रपाठपूर्वकमिति दिक् ।

अथमाध्यात्मिकसन्ध्यानुष्ठानेऽभिमन्त्रित-जल-पानार्थंमन्त्र-माह आपः पुनं त्विति । प्रतिग्रहकं स्वाहा इति च याः आपः सन्तिता आपः पृथिवीं पुनन्तु प्रक्षालनेन शोधयं तु सा च पृथिवी पूनास्तुद्धासती मां अनुष्ठातारं पुना तु शोधयतु ।

तथा ब्रह्मण: वेदस्पति:। पतिं द्वितीयार्थे प्रथमा प्रतिपालकमाचार्य्यं एता अप: पुनं तु तेनाचार्य्योपदिष्टं ब्रह्मवेद स्वरूपं पूता स्वयं पूतं तत् मां पुनं तु अन्यक्तभुक्तावशिष्टरूपं उच्छिष्टं यच्च अभोज्यं भोक्तुमयोग्यं तादृशं कदाचिन्मया भुक्तं यद्वा दुश्चरितं अन्यदपि निसिद्धाचरणरूपं मम किञ्चित् सम्पन्नरूपं तत्सर्वं परिक्रम्येति शेष: ततोमामाप: पुनं तु तथा असतां श्रद्धादीनां प्रतिग्रहं च मयाकृतं पुनं तु तदर्थमभिमन्त्रितमुदकं स्वाहा मदीयवक्त्राग्नौ सुहृतमस्तु इत्यर्थ:।

अथ सायंसंध्याकाले जलपानार्थमन्त्रमाह। अग्निसूत्राजुहोमिस्वाहा इति योऽयमग्निरस्ति यश्चमन्यु: क्रोधाभिमानो देव: ये च मन्युपतय: क्रोधस्वामिन: तन्नियामकादेवा: सन्ति ते सर्वेऽपि मन्युकृतेभ्य: मदीयकोपनिष्पादितेभ्य: पापेभ्य: मा मां रक्षान्तां पापिनं मां तत्पापविनाशनेन पालयं तु किञ्च अतीतेनाह्ना तस्मिन्नहनियत्पापं अकार्य्यं कृतवानस्मि केन २ साधनेन मन आदिभि: शिश्नान्तैरवयवै: तत्सर्वं पापं अहरवलुम्पतु अहरभिमानी देवो विनाशयतु परहिंसादिचिन्तनं मानसं पापं अप्रियानृतादिभाषणं वाचिकं अभिचारहोमादिकं हस्तकृतं पादेन गो ब्राह्मणस्पर्शादिकं पादकृतं अभोज्यभोजनमुदरकृतं अगम्यागमनं शिश्नकृतं अथवा किमनेन परिमितगणनेन यत्किमपि उदितं मयिनिष्पन्न तदिदम्पापजातं सर्वं तत्कर्त्तारं मां च लिङ्गशरीररूपं अमृतयोनौमरणरहिते जगत्कारणे सत्ये कालत्रयाबाध्ये ज्योतिषिस्वयं प्रकाशे वस्तुनि जुहोनि प्रक्षिपासि अहमनेन होमेन सत्सर्वं भस्मीकरोमीत्यर्थ: तदर्थमभिमन्त्रितमिदं तलं स्वाहा मदीयवक्त्राग्नौ स्वाहुतमस्तु इत्यर्थ:।

सूर्य्य अहर्निष्पादके सूर्य्योपाधिके ब्रह्मणि अन्यत्सर्वं पूर्ववत्।

पञ्चविंशतिपृष्ठाकाचतुर्थपंक्तिका पर त्रुटिपत्रम्।

* सू॰ ओं आपः पुनन्तु पृथिवीपूता पुना तु मां पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुना तु मां यदुच्छिष्टमभोज्यं वा यद्वा दुश्चरितं मम सर्वं पुनन्तु मामापोऽसतान्च प्रतिग्रहꣳ स्वाहा। सू॰ *

अथ मध्याह्नसन्ध्यानिर्णयमाह। यत्तु मन्त्रार्थविपरीताय सा स्मृतिर्नं वक्ष्यते इ इति न्यायमाश्रित्येति केचिद्वदन्ति मध्याह्नसंध्यानकर्त्तव्या मपूनाऽनुक्तत्वात् इति तन्मन्दं प्रातः सूर्य्यश्चेत्युक्त्वा सायमग्निश्चेति च आपः पुनन्तु मध्याह्ने कुर्य्यादाचमनं ततः इति राजाद्यलिखितमैत्रायणीय गृह्य-परिशिष्टवचनं प्रमाणम् कात्यायनः पुष्पाख्यम्बुमिश्राण्यूर्द्ध क्षिप्तोर्द्ध्वबाहुः सूर्य्यमुदीक्षेत इति कुर्य्यात् कृताञ्जलिर्वापि ऊर्द्ध्वबाहुरथापि वा इति छान्दोग्यपरिशिष्टं व्यासः गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने सरस्वती च सायाह्ने सैव संध्या त्रिषु स्थितेति एतत् संध्यात्रयं प्रोक्तं ब्राह्मण्यं यद-धिष्ठितम् इति छन्दोगपरिशिष्टं याज्ञवल्क्यः संध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मनिदा सदा। त्रयाणाञ्चैया देवानां ब्रह्मा-दीनां समागमः सन्धिः सर्वसुराणाञ्च तेन संध्या प्रकीर्त्तिताः पूर्वा संध्या च गायत्री सावित्री मध्यमा स्मृता या भवेत्-पश्चिमा सन्ध्या विज्ञेया सा सरस्वती इति पुनः सैव त्रिकाल-सन्ध्याकरणात्तत्सर्वञ्च विनश्यति इत्यादिशास्त्रैर्मध्याह्नसन्ध्या न करणीयेति वदत् परास्तः पिञ्च कात्यायनेन मध्याह्न-स्नानोत्तरं केवलाया अपि विधानं लिखितं नरसिंहपुराणेऽपी च प्रमाणं द्रष्टव्यं किं कथनेन बहुना किञ्च उत्तीर्य्यधौते वाससी परिधाय मृदोरुकरौ प्रक्षाल्याचम्यत्रिरायाम्यासून् इत्यादिना कात्यायनेनापि उक्तत्वात्। मनुरप्याह अपां समीपे नियतो नैत्यिकं विधिमास्थितः सावित्रीमप्याधीयीत

गत्वारण्यं समाहितः इत्यत्र सावित्री शब्देन मध्याह्न सन्ध्या बोधिता सावित्री मध्यमे दिने इति व्यासवचनात् मध्याह्न-कालीन् गायत्री जपस्य सावित्री त्वेन विधानात्। कुल्लूक-भट्टः अपां समीपे इति ब्रह्मयज्ञरूपमिदं बहुवेदाध्ययनाशक्तौ सावित्री मात्राध्ययनमपि विधीयते अरण्यादिनिर्जनदेशं गत्वा नद्यादिजलसमीपे नियतेन्द्रियः समाहितोऽनन्यमना नैत्यिकं विधिं ब्रह्मयज्ञरूपमास्थितोऽनुतिष्ठासुः सावित्री-मपि प्रणवव्याहृतित्रययुतां यथोक्तामधीयीत यथोक्तामित्य-नेन संध्योक्तप्रकारां मध्यह्नसन्ध्यामित्यर्थः। मध्याह्नाचमन-मन्त्रव्याख्या आपः पृथिवीं पुनन्तु न केवलाम् पृथिवीं किन्तु ब्रह्मणस्पतिमपि पृथिवी अद्भिः पूता सती मां प्रत्यगात्मानं पुना तु पुना तु पुनन्तु मां ब्रह्मणस्पतिः मनसस्पतिः यद्वा देहस्याश्रयः परमात्मा मां पुनन्तु ब्रह्मपूतां पूतं मां पुनन्तु अत्र पृथिवीपदेन पार्थिवो देहो विवहितः ततश्च आपः पृथिवीं पुनन्तु मदीयं पार्थिवतनुं पुनन्त्वित्यर्थः इत्यत्र देह-प्रानद्वारा मां आपः पुनन्तु कुत्रचित् यत् उच्छिष्टमपावनं अभोज्यं गर्हितं यद्वा दुश्चरितं असदाचरणं असताञ्च प्रति-ग्रहं तत्सर्वं आपः पुनन्तु या आपः आचमनान्ते सुहुता भवन्तु ता आपः मां उच्छिष्टादिरूपं पावनपूर्वकं पावयन्तु इत्यर्थः।

———